श्रीश्रीहरिः—शरणम्।

# महाप्रस्थानम्।

(अर्जुनावर्त्तनम्।)

यस्मिञ्जगत् सुन्दरमाविभाति
यस्यैव वा तत् सुविलासभूमिः।
न तस्य यस्मादपि वा विशेषो
नमस्यते सस्तुति कोऽपि सोऽयम्॥ १॥

विश्वं यतः सुस्फुटमाविरस्ति
तिष्ठत्यलं यत्करुणामहिम्ना।
यस्मिन् स्वकाले परिलीयते च
परात्परं तं प्रणमानतोऽस्मि॥ २॥

आसीद्धिमाला यमुनोपकण्ठे
नितान्तविन्यासविशेषलक्ष्मीः।
विचित्रचित्रावलिशोभमाना
पूर्हस्तिनेति प्रथिता पृथिव्याम्॥ ३॥

अहो! जगत्सन्दुरशेषसत्तेः
सारादिव व्यक्तशुभप्रकाशा।
चिरं लसत्पुण्यपतङ्गभङ्ग-
वीसत्तकृष्णानगणोपगूढा॥ ४॥

षड्ङ्घ्रिसङ्गीतनिनादरम्या
लताततिश्लिष्टतरुप्रशोभा ।
समीरणान्दोलितपत्रपाणि-
प्रवीज्यमाना रसिकोत्तरान्ता ॥ ५ ॥

प्रफुल्लपुष्पावलिसौरभाढ्या
द्विरेफझङ्कारलसत्प्रमोदा ।
नभस्वदाधूतमनोज्ञपुष्पवत्-
सरोजकह्लारपरागदिग्धा ॥ ६ ॥

इयं शरत्पार्व्वणशर्व्वरीश-
निकामनिष्पीडनलब्धसारैः ।
भृशानुलिप्तेन घनाश्रितेन
दृढेन वप्रेण विराजते स्म ॥ ७ ॥

सुधावदातैर्भवनैः प्रशस्तै-
रेषा क्वचित् स्थाणुविवर्धितश्रीः ।
जिगाय कैलासमनन्तशृङ्गं
स्थाणुस्थिरं सुन्दरशोभमानम् ॥ ८ ॥

स्थले स्थले नीलसरोजिनीव
वेदिर्नवा मारकती विचित्रा ।
लोलेतरेषामपि मानसानि
समन्ततः सत्वरमाददाति ॥ ९ ॥

क्वचित् क्वचिन्निर्म्मलसूर्य्यकान्तो-
पलेषु भास्वत्प्रतिबिम्बनोत्थः।
शिखी दिवा खाण्डवजातदावा-
नलं समस्मारयदत्र भूयः ॥ १० ॥

अनन्तदेवर्षिमहर्षिदिव्य-
राजर्षिचारुप्रतिबिम्बचित्रैः।
सुशोभमानेन नवालयेन
न का स्थली साधु सदा रराज ? ॥ ११ ॥

प्रासादसार्थोऽमृतसाधुसिक्तः
प्रसादयन्वीक्षणमानसानि।
प्रसीदतोऽस्मिन्नन ईक्षणां च
शशाक लब्धुं ननु यौगिकार्थम् ॥ १२ ॥

प्रचण्डघर्म्मप्रविघातिनीषु
क्षपासु सार्धं दयितैरमण्यः।
सुचन्द्रकान्तोपलसृष्टसौधे
सुखं भ्रमन्त्यो मुदमापुरत्र ॥ १३ ॥

नवीनमेघद्युतितस्करेषु
मृदङ्गगम्भीरनिनादितेषु।
सौधेष्वलं मारकतेषु नित्यं
मुदा मयूरोऽसमयेऽप्यनृत्यत् ॥ १४ ॥

सिन्दूररागारुणकान्तयोऽत्र
क्वचिन्नवीनामणयः समन्तात् ।
सन्तोषयामासुरकाल एव
निर्मोहसम्भ्रान्तिभिरेव लोकान् ॥ १५ ॥

अर्कत्विषोऽभ्युदयप्रलोप-
प्रभाविडम्बीनि निकेतनानि ।
स्थले स्थले विस्मितमानसानां
भजन्ति सन्दर्शनकर्म्मतां स्म ॥ १६ ॥

पीयूषकान्तद्युतिविद्विषाणि
पदे पदे स्फाटिककुट्टिमानि ।
परिष्कृतप्रोज्ज्वलदर्पणानां
सौभाग्यगर्व्वं स्म विलोपयन्ति ॥ १७ ॥

वियद्गताग्रेषु नृपालयेषु
वातायनं निर्म्मितमिन्द्रनीलैः ।
अनर्पणायैव नवागतानां
जहार चक्षूंषि सदा प्रसह्य ॥ १८ ॥

वलप्रतिक्षिप्ततमोभराणां
निवासवेश्मोपगुणां मणीनाम् ।
ज्योतिष्मतां लोपमकामयन्त
सन्ध्यागमे भर्त्तृरतां नवोढ़ाः ॥ १९ ॥

नन्विन्द्रनीलायतकुट्टिमेषु
समुद्गता नीरदनीललक्ष्मीः ।
प्रत्यग्रदूर्वाङ्कुरलोलजिह्वान्
समन्तिकस्थानपि सञ्चकर्ष ॥ २० ॥

वैदूर्य्यरत्नामलकुट्टिमानां
चिरस्थिरां तां सुषमामतीत्य ।
चिरोषितानामपि वीक्षणानि
नान्यत् समास्कन्दुमभीषुरासु ॥ २१ ॥

गृहे गृहे ताण्डविनीलकण्ठ-
केकाभिराभिः श्रुतिहारिणीभिः ।
आहूयमानो रसिकप्रकाण्डः
समन्ततो न्यक्षिपदक्षि दूरे ॥ २२ ॥

सुधाकरालिङ्गितचन्द्रकान्तो-
पलस्खलद्वारिभिरेव तत्र ।
सुखोषितानां प्रमदाजनानां
क्रिया अनल्पा अपि पूर्त्तिमापुः ॥ २३ ॥

प्रातः कलालापमदोत्सुकाना-
मनूनकूजैः शुकसारिकाणाम् ।
श्रुतिप्रपेयाप्यधिकेव तत्र
स्फूर्त्तिं न चापद्यत बन्दिगीतिः ॥ २४ ॥

रत्नप्रभोद्दीप्तगृहेषु नित्यं
भृशं कलालापनितान्तरक्ताः ।
वराङ्गनास्ता रसिकान् सुखेन
व्यस्मारयन्नन्दनदिव्यनारीः ॥ २५ ॥

रत्नावलीमञ्जुमणिप्रवाल-
मुक्तालिचामीकरशुक्तिजातैः ।
विद्योतिताभिर्विपणीभिरेषा
विभास्यते स्मातुलशोभमाना ॥ २६ ॥

पयोधरस्थापितनिश्चलाग्रैः
समीरणास्पृष्टविलोलवस्त्रैः ।
ध्वजैरसंख्यानि निकेतनानि
सौभाग्यमस्यानिदधुः समुच्चैः ॥ २७ ॥

दिनेश्वरं नन्वपि यामिनीशं
नितान्ततीव्रं युगपद्धसद्भिः ।
रत्नैः प्रभाभिः सुरतप्रदीपो
व्यर्थीकृतो नातिसमुष्णशीतैः ॥ २८ ॥

स्पर्शानुमेयाम्बुविभूषितानि
सुखानि सन्तापहराणि तानि
निशाब्जपद्मावलिवीक्षणेन
सरांस्यपश्यन् सुभगत्वमस्याः ॥२९ ॥

समीरलोलाम्बुसलीलखेल-
न्मरालकूजद्विहगाकुलान्ताः ।
वैदूर्य्यसम्बद्धसुहृद्यतीराः
विरेजुरस्यां सरसं सरस्यः ॥ ३० ॥

गभीरगर्ज्जन्मुरजानुविद्ध-
धाराग्रहौघैः शुशुभेऽलमेषा ।
विलासिलोकस्मितकौतुकाढ्य-
वाणीकलालापनिकेतनैश्च ॥ ३१ ॥

पिकप्रमोदोपहृताम्रपुष्प-
परागमुक्तैर्मकरन्दजातैः ।
निरन्तरोन्मीलितपुष्पवृष्टि-
निपातसिक्ताश्रमवद्बभासे ॥ ३२ ॥

धरारिसार्थे स्वयमेव भस्मी-
भूते महाभारतयुद्धवह्नौ ।
पतङ्गवत्तत्र महात्ममावान्
युधिष्ठिरः शासनदण्डमाप ॥ ३३ ॥

अगाधगाम्भीर्य्यबलैः समुद्रः
सुमेरुरद्रिर्ननु गौरवेण ।
कामप्रदानेन वसुन्धरेयः
सोऽयं महात्मा नवकल्पवृक्षः ॥ ३४ ॥

तितिक्षमाणेन महामहिम्ना
विश्वं जितं देवगणोऽपि साधु ।
अत्यन्तनीचैः कृत एव सत्ये-
र्यमेन नीता यमिनोऽपि तौच्छ्रम् ॥ ३५ ॥

सुखं समाश्लिष्य तरुं महान्तं
वल्ली यथा विस्तृतिमेति शीघ्रम् ।
नितान्तसाध्वी विमला तमेत्य
मतिर्निरूढिं प्रययौ त्रयीषु ॥ ३६ ॥

तदन्विता साधुफला धरित्री
दिवोऽपि देवेन्द्रजुषो हि नास्ति ।
तद्भर्तृका पूर्विरराम नेवा-
मरावतीं जेतुमलं कदापि ॥ ३७ ॥

यथा सरोजानि सहस्ररश्मे-
र्निशाधिनाथात्कुमुदानि यद्वत् ।
शास्त्राण्यनन्तानि तथैव भूपा-
त्ततः प्रकाशं स्वयमेव भेजुः ॥ ३८ ॥

सुधामरीचिं विमलं पयोधिं
सरोजराजिं कुमुदावलिं च ।
विहाय विश्राय सदैव लक्ष्मी-
र्नारायणं तं च समं सुखेन ॥ ३९ ॥

अश्रुप्रपूरातुरमक्षि यस्यो-
रपि प्रसोढुं न च तेन शेके ।
न वा सुतस्यापि महान् प्रमोदो
दुर्नीतिमिथ्याव्यसनप्रजातः ॥ ४० ॥

अहो ! सुधासागरफेनसार-
प्रभं यशः शारदचन्द्रशोभि ।
अस्य क्षणेनैव तमो निरस्य
शुक्लीचकारेव सुखं धरित्रीम् ॥ ४१ ॥

पुत्रः स पुत्रामृतवञ्चितस्य
पिता स पित्रा रहितस्य दाता ।
सुहृद्विहीनस्य सुहृत् स एव
चिकित्सको रोगजडस्य सोऽभूत् ॥ ४२ ॥

लोभाम्बुधीनां मुनिरद्वितीय-
स्तृष्णालतानां कठिनः कुठारः ।
आपत्तृणानां प्रबलो दवाग्नि-
र्मिथ्याकथाया अतिमूक एषः । ४३ ॥

असज्जनानामयमद्रिरस्तः
सतां जनानामुदयः क्षमाभृत् ।
न्यायेतराचारविधिप्रवृत्त-
पुंसामतुल्यः खलु धूमकेतुः ॥ ४४ ॥

आदर्श एषोऽत्र सतामभूल्यो
मनस्विनामग्रगतोऽस्ततन्द्रः ।
कुलैकगेहं ननु सद्गुणाना-
मसौ सदाचार-नितान्तरक्तः ॥ ४५ ॥

तस्मिन्नृपे शासति तां धरित्रीं
नवो नवोऽभ्युच्चय आजगाम ।
चिरन्तनी सा प्रकृतिः प्रशस्ता-
नवाप्यभूदेव तदा नवेव ॥ ४६ ॥

विख्यातिशायिन्यपि शक्तिरस्य
क्षमामहिम्नैव कदाप्यतुल्यां ।
न चापि निःसारयति स्म कार्यें
रम्योपदेष्टृत्वमहो ! प्रशस्तं ॥ ४७ ॥

ततोऽनुजातो ननु भीमसेनः
सदाद्वितीयो दृढ़वाहुयुद्धे ।
यत्पाणिशय्यामधिशय्य जग्मु-
श्चिराय निद्रां धृतराष्ट्रपुत्राः ॥ ४८ ॥

वभूव तस्यानुज एकवीरो
धनञ्जयो, येन धरां विजित्य ।
सुरद्विषामप्यतिशासनेन
देवेन्द्रसाहाय्यमकारि नित्यं ॥ ४९ ॥

नीत्या श्रिया चारुधिया विनीत्या
धीरत्व-वीरत्व-समुत्सवैश्च ।
क्षमा-तितिक्षा-करुणाभिरेषः
सुरासुरानप्यवशीचकार ॥ ५० ॥

विमातृजौ तस्य सदा सुशीलौ
ज्ञानेन कान्त्या च मनोहरन्तौ ।
अनन्यसाधारणभक्तिनम्रा-
वतिष्ठतामग्रजशासनेषु ॥ ५१ ॥

तेषामुदारा महनीयवृत्ता
सा द्रौपदी धर्म्मवधूर्बभूव ।
श्रिया धिया सत्कृतिविद्यया स्म
या वर्त्तते विश्वललामभूता ॥ ५२ ॥

उदारवृत्तैरनुजैश्चतुर्भि-
रेभिः समं चान्तिकधर्म्मपत्न्या ।
राजा सदा विश्वमनःसु तिष्ठन्
सुखेन शान्त्या च चिरं रराज ॥ ५३ ॥

अथैकदा सुन्दरशोभितायां
युधिष्ठिरस्तत्र चिरं वसन् सन् ।
मलीमसास्येक्षणमानसेन
प्रतीक्षते कस्यचिदेव वर्त्म ॥ ५४ ॥

दुर्भावनातीव्रशिखिप्रदग्धा-
ङ्गारस्वरूपैर्मलिनैर्वपुर्भिः ।
समन्ततस्तस्य,च वृत्यते स्म
विनार्जुनं भ्रातृभिरत्र पक्षा ॥ ५५ ॥

आस्यान्न कस्यापि समन्ततोऽस्मिन्
विनिर्गता काचन जातु वाणी ।
गभीरभावार्णवगाह्यमानः
समीरणोऽपीव न वाति किञ्चित् ॥ ५६ ॥

न किञ्चनाङ्गं कियदप्यवुद्ध-
महो ! तदानीं सरसं चकम्पे ।
पातुर्भुवः शासनसाध्वसेन.
तूष्णीं बभूव प्रकृतिः किमत्र ! ॥ ५७ ॥

न भिद्यते कस्यचनास्यमुद्रा,
न स्पन्दते पत्रमपीह शुष्कं ।
क्षणे क्षणे,केवलमुष्णदीर्घ-
निश्वासजातं जडताविरोधि ॥ ५८ ॥

नेत्रे विषादो वदने विषादः
श्वासे विषादो हृदये विषादः ।
आद्यन्तमध्येष्वपि संविषादो
जगद्विषादे स्म निमज्जतीव ॥ ५९ ॥

हा ! द्वारका-बालकवृद्धपत्नी-
प्रजादिभिः सार्द्धमलं विषण्णः ।
जिष्णुर्विषण्णाग्रजसन्निधाने
तस्मिन् क्षणेऽस्मिन् सहसोपतस्थे ॥ ६० ॥

यावन्न कोप्येक इहान्तिकस्थो
लक्ष्यीचकारैव स तावदेव ।
सर्व्वाग्रजस्याङ्घ्रिसरोजमाशु
नमन् दृगङ्घ्रिविषमं सिषिच ॥ ६१ ॥

समुन्मनस्कः प्रथमं न किञ्चिद्-
विवेद, पश्चात् पतितं दृगम्बु ।
उष्णां, ततः स्पर्शत एव पार्थं
स्नेहप्रकर्षोद्भवतोऽभिजज्ञौ ॥ ६२ ॥

धर्म्मात्मजः पादतले पतन्तं
तमर्जुनं साग्रहमालिलिङ्ग ।
स्नेहप्रकर्षावशलोललोला-
मितोन्नताभ्यां सहसा भुजाभ्यां ॥ ६३ ॥

विषण्णपार्थेन निवेदितोऽपि
विषादनिःश्वासमयो भवन् सन् ।
युधिष्ठिरोऽस्पष्टमपृच्छदेनं
हा ! द्वारकायादवभद्रवार्त्तां ॥ ६४ ॥

मुकुः समुक्तोऽपि विभत्सुरत्र
न किञ्चनापि क्षमते स्म वक्तुं ।
निरन्तरं केवलमीक्षणाद्भि-
रधोमुखो भूतलमासिषेच ॥ ६५ ॥

ततोऽर्जुनानीतपुरन्ध्रिसार्थे
उपस्थिते दर्शनवारिषिक्ते ।
तद्दर्शनोद्भव एव कोऽपि
शोको महान् सर्व्वमुपावृणोति ॥ ३६ ॥

युधिष्ठिरे तत्र नितान्तखिन्ने
मोहोदरस्थे पतिते धरायां ।
पतद्रसालाश्रितवल्लिकल्पाः
अन्येऽपि हाहा ! लुलुठुः समन्तात् ॥ ६७ ॥

केचिद्धरायां न्यपतन्नसंज्ञाः,
प्रमुक्तकण्ठं व्यलपंश्च केचित् ।
केचिद्रसां नेत्रजलैरषिञ्चन्
न्यपीड़यन् केचिदुरांसि मुष्ट्या ॥ ६८ ॥

वैधव्यवेशः प्रमदाजनानां,
पित्राद्यभावः खलु बालकानां ।
हा-हा-विलापोऽपि च नागराणां
नवां दशामत्र समानिनाय ॥ ६९ ॥

युगपदमितवेगत्रस्तमर्त्त्याभिपातै-
विषमविषमवक्षःपीडनैः शीर्षघातैः ।
करुणविलपनैस्तैर्मुक्तकण्ठप्रलापैः
किमिव किमिव भूतं तत् स्थलं हा ! तदानीं ७०

इति श्रीअन्नदाचरण तर्कचूडामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
अर्जुनावर्त्तनं नाम
प्रथमः सर्गः ।



(यादवपरिणामः ।)

अर्जुनं करुणमब्रवीत्ततो
धैर्य्यमेत्य हृदयो युधिष्ठिरः ।
द्वारकाविवरणं सविस्तर-
मुच्यतां श्रवणतत्परोऽभवम् ॥ १ ॥

त्रुट्यते स्म ननु येन तत्क्षणात्
वज्रसारघननिर्म्मितेन न ।
तेन किं सकलमेव शृण्वता
श्वासश्चाशु चरमः प्रलप्स्यते ? ॥ २ ॥

अर्जुनोऽथ नयनाम्बुचर्च्चित-
स्तारनिश्वसनकम्पिताधरः ।
वाक्यगद्गदमलं शनैः शनैः
वक्तुमेवमुपचक्रमेऽखिलं ॥ ३ ॥

एकदा कुशिकनन्दनादिषु
द्वारकापुरमुपागतेष्वलं ।
वेशमाशु परिधाप्य योषितः
शाम्बमीक्षणपथे न्यपातयत् ॥ ४ ॥

तानपृच्छदपि शारणो भृशं
यूयमेव सकलार्थदर्शिनः ।
ब्रूत,—वभ्रुनवभार्य्यया किमु
गर्भभारनतया सविष्यते ? ॥ ५ ॥

शारणप्रबलचातुरीमिमां
ज्ञातवन्त इह ते प्रचुक्रुधुः ।
अत्र वंश्य यदुवंशनाशको
लौहमुद्गर इतः चरिष्यति ॥ ६ ॥

शापएव खलु लौहमुद्गरो
मूर्त्तिमानिव भवन् परेद्यविः ।
क्षेपनाय सहसा यमानने
हा ! पपात भुवि शाम्वकुक्षितः ॥ ७ ॥

उग्रसेनमतवर्त्तिनस्तदा
साध्वसोपहतदुर्ब्बलान्तराः ।
यादवा दृढ़वलं तमायसं
सन्निघृष्य जलधौ निचिक्षिपुः ॥ ८ ॥

योगिशापपरिपाकहेतवे
आयसामितकणाः किलाभवन् ।
एड़कास्तदवशिष्टभागको-
व्याधपीणितलमाश्ववशिश्रियत् ॥ ९ ॥

वासरेषु सुगतेषु केषुचित्
कालपूर्त्तिवशतो निरन्तरं ।
द्वारकापुरि तदा समन्ततो
दुर्न्निमित्तमखिलं स्म दृश्यते ॥ १० ॥

सध्वनि प्रवहति प्रभञ्जनः
कर्कशः स्म, हरितो हिमावृताः ।
उल्कया मलजुषा न्यपत्यत,
शोषमाप तटिनी महत्यपि ॥ ११ ॥

भ्राम्यति स्म सततं गृहे गृहे
मस्तकोन इह कोऽपि भीतिदः ।
रथ्यया मृतपतङ्गमूषिक-
पावृता विकृतया स्म लभ्यते ॥ १२ ॥

सुप्तयादवकचान् प्रचिच्छिदुः
मूषिकाः, द्विजगणान् विदिद्विषुः ।
शारिका अपि चुकूजुरश्रव-
मन्यदापि तमसा विधुग्रहः ॥ १३ ॥

दुर्न्निमित्तमभिवीक्ष्य भारत-
युद्धपूर्व्वसमये विलोकितं ।
केशवः समवदद्धलायुधं
नाशकाल उपगच्छतीह नः ॥ १४ ॥

अन्धराजवनिता पतिव्रता
पुत्रशोकविधुरा यदब्रवीत् ।
तस्य काल इह पूर्त्तिमेत्यलं,
दृश्यते प्रतिविधानमस्य न ॥ १५ ॥

दृश्यतां—सुखसुषुप्तयोषितां
भद्रसूत्रसकलं हरन्त्यलं ।
केचनेह सततं गृहे गृहे
रक्तवृष्टिरधिका विराजते ॥ १६ ॥

मेदिनीविषमभारलुप्तये
तस्य तस्य वचसश्च पूर्त्तये ।
सर्व्वमेव ननु केशवस्तदा
हा ! प्रभासगतये समादिशत् ॥ १७ ॥

वासुदेववचनेन नागराः
सार्द्धमेव रमणीभिरुत्सुकाः ।
प्राप्य सागरतटे प्रभासकं
चारुचारु भवनं विनिर्म्ममुः ॥ १८ ॥

द्वारकापुरि यथा, तथा तदा
तत्र कण्ठविनियुक्तबाहुभिः ।
स्त्रीभिरासु समयं समं मुदा
तेन तेन वचसातिचक्रमुः ॥ १९ ॥

नीलवारिनिधिवीचिसेविते
सुन्दरे तटवने निराविले ।
वासराणि ननु कानिचित् समं
यापयन्ति महिलाः स्म यादवैः ॥ २० ॥

एकदा खलु विदन्ननागत-
मुद्धवः सपदि योगमाश्रितः ।
तेजसा त्रिभुवनं तिरोदधत्
कुत्रचिद्द्रुतमहो ! तिरोदधे ॥ २१ ॥

अन्तिकोपगतमृत्यवस्तदा
यादवा अह ह ! विस्मितान्तराः ।
पश्यतोरिह नु ! रामकृष्णयो-
रासवं प्रमददं चिरं पपुः ॥ २२ ॥

मद्यपानजमदैकदूषिताः
यादवा मतिविवर्जितास्तदा ।
पालनीयनयवर्त्मतो भृशं
चस्खलुः समयदन्तचर्विताः ॥ २३ ॥

पानसंसदि तदान्यनिन्दनं
कौतुकात् प्रववृते परस्परं ।
तत्र तेषु युयुधानकः कृत-
कर्म्मवीरमुपहासतोऽब्रवीत् ॥ २४ ॥

क्षत्रवीरकुलसम्भवः कदा
हन्ति कः सुमृतवत् सुषुप्तिगं ?
कर्म्म यद्विहितवान् भवानहो !
यादवेषु सहते न कोऽपि तत् ॥ २५ ॥

सात्यकिप्रभृतिषु क्रमादल-
मेवमेव कथयत्सु निन्दितः ।
सोऽब्रवीदसकृदेव तानलं
वामबाहुपरिचालनैः स्वयं ॥ २६ ॥

छिन्नबाहुरुपविष्टएव भू-
रिश्रवा रणभुवि क्षयं गतः ।
केन ? तस्य विधुरस्य घातकः
क्षत्रियापसदको न किं भवेत् ? ॥ २७ ॥

इत्थमेभिरिह यः कलिः कृतः
स क्रमेण वचसाभिवर्द्धितः ।
सङ्गरे परिणनाम तत्क्षणात्
व्यापयच्च सकलाद्रिमस्ततः ॥ २८ ॥

द्वावतात्र युयुधान उत्सुकः
केशवस्य सविधे मदोद्धतः ।
तत्क्षणादमिततेजसा कृत-
कर्म्मवीरमसकृत् शिरस्यहन् ॥ २९ ॥

तत्क्षणे विरहितेऽथ संज्ञया
सर्व्व एव मदभुक्तमानसाः ।
कालकृष्टचिकुरा इव क्षण-
मक्रमेण रणसागरेऽपतन् ॥ ३० ॥

आकुलाङ्गदृढमुष्टिवर्द्धितं
येन केनचिदहुर्लभेन ते ।
आयुधोपकरणैर्विनाकृताः
सङ्गरं प्रविदधुः कचाकचि ॥ ३१ ॥

अन्तिकोपगतवस्तुभावतो
दृप्तभीमबलगर्व्वितात्मनः ।
ते समीपगतमेड़कावनं
कार्य्यसाधकमिव प्रमेनिरे ॥ ३२ ॥

मूर्त्तिमन्तमिव शापमुन्नत-
मेड़काकुलमहो ! मदोद्धताः ।
ते प्रगृह्य सबलं परस्परं
हन्तुमत्र सुतरां प्रतस्थिरे ॥ ३३ ॥

हन्त हन्त ! खलु काललीलया
तेन ते विनिहताः यथा यथा ।
शेषनिश्वसनमोचितास्तदा
भूतले निपतितास्तथा तथा ॥ ३४ ॥

इत्थमेव भवखेलवञ्चिते
रम्ययादवकुले स्वकर्म्मतः।
हा! हताहमिति दीर्घनिस्वनो
योषितां प्रववृते समन्ततः॥ ३५॥

आर्त्तयोषिदतितारोदनं
क्षेपणं गगनगामिवृंहितं।
अभ्रगं विलपनञ्च कूजनं
तद्धि सर्व्वमयमत्रचक्रिरे॥ ३६॥

वभ्रुणाथ सह दारुकेण च
केशवे हलभृतोऽन्तिकं गते।
दारुको हरिसमाज्ञया द्रुतं
नेतुमेव वत मामिहागमत्॥ ३७॥

ब्रह्मशापवशतोऽथ कस्यचित्
लब्धकस्य करतः समागतः।
वाण एक इह कृष्णसन्निधौ
वभ्रुजीवनमपाहरत् क्षणात्॥ ३८॥

"यावदत्र पुनरागतोऽस्म्यहं
तावदेव ननु वर्त्ततां भवान्"।
रेवतीरमणमुक्तवानिति
द्वारकां समगमज्जनार्द्दनः॥ ३९॥

"प्रेतकाननसमानकाद्गितो
यामि चारु सुचिराय, जीवनं ।
कर्त्तयामि हलिना समं वने,
पालयिष्यति नु ! वो धनञ्जयः" ॥ ४० ॥

उक्तवानिति जनार्द्दनः क्षणा-
दार्त्तनादभृशरोदनैः समं ।
निःसृतः सपदि माधवो ययौ
रौहिणेयसमधिष्ठितं वनं ॥ ४१ ॥

निर्ज्जने निविड़काननै हली
चित्तवृत्तिरहितश्चिरस्थिरः ।
तत्र तद्वदनतो महाफणी
निर्गतः खलु विवेश सागरं ॥ ४२ ॥

वीक्ष्य रामचरमावलम्बनं
केशवोऽपि वत ! योगमाश्रयत् ।
पक्षिपातनरतो जराभिधो
लुब्धकोऽस्य हृदि वाणमक्षिपत् ॥ ४३ ॥

तेन वाणपतनेन माधवो
मानुषीं तनुमपास्य तत्क्षणात् ।
आद्ययोगिवचनं प्रमाणयन्
गच्छति स्वयमलं स्वरूपतां. ॥ ४४ ॥

दारुकश्रुतसुविस्तरस्तदा
पूर्व्वमेवमगमं प्रभासकं ।
नृत्यगीतमृदुवाद्यवञ्चित-
रङ्गभूमिखरदुर्द्दशाश्रितं ॥ ४५ ॥

वीक्ष्य तत्र चरमां दशां हरे-
र्मूर्च्छितोऽप्ययमसौ मलीमसैः ।
वज्रसारदृढनिर्म्मितासुभि-
र्नैव भाग्यविरलो निराकृतः ॥ ४६ ॥

वैरिदारुककृताभिषेचनै-
रल्पकालपरमाप्तवं चितं ।
अच्युतोऽहमभवं यथा तथा
यादवैरपि गतं यथा तथा ॥ ४७ ॥

तत्परं भ्रमणमाश्रयंश्चिरं
दारुकोद्धृतकरोऽपि दुर्ब्बलः ।
वीर-बालक-नितम्बिनीगण-
दुर्द्दशामयमहं व्यलोकयं ॥ ४८ ॥

हा ! ततो नगरवासिरोदनैः
अर्द्द्यमान इव साश्रुलोचनः ।
द्वारकां समगमं हतादर-
मूर्च्छितप्रकृतिपुञ्जमर्द्दितां ॥ ४९ ॥

सा पुरी व्यसनजातकर्षिता
भिन्नभाग्य विधवाविभावती ।
तत्क्षणेऽभवदहो ! महीक्षण-
सञ्चितद्विगुणरोदनध्वनिः ॥ ५० ॥

वल्लरीह सरसी निकेतनं
कृत्रिमं विपिनमाशु पादपः ।
सत्वजातमपि मानवोच्चयो
भाति भिन्न इव कृष्णवञ्चितः ॥ ५१ ॥

तत्क्षणं करुणरोदिनीतति-
वेष्टितोऽहमपतं सुमूर्च्छितः ।
मन्दभाग्यपरिवोधितः पुन-
रब्रवं न किमपि, व्यलोकयम् ॥ ५२ ॥

तत्क्षणस्य मनुजस्य तादृश-
स्तत्पुरो विवरणं यथायथं ।
भाषयैव न सुशक्यते खलु
वर्णितुं, क इह मादृशोऽवशः ॥ ५३ ॥

चेतनः किमथवा सचेतनो-
निद्रितः किमथवा विवोधितः ।
नैव वोद्धुमहमीश्वरोऽभवम्
तादृशव्यसनमर्द्दितान्तरः ॥ ५४ ॥

उग्रसेन-वसुदेवयोस्ततः
शोकमोहपरितप्तयोस्तदा।
पादपङ्कजमहं भृशं स्वत-
श्चार्चयं प्रणतमस्तकाश्रयैः ॥ ५५ ॥

हन्त ! तद्विलपनार्त्तरोदन-
रुद्धकर्णविवरस्य मे तदा।
तद्गिरां कियदुदेति हा ! श्रुतौ
नापरं प्रहतचित्तमर्म्मणः ॥ ५६ ॥

तत्परं सहजयन्नवत्तदा
किं किमाशु कृतवान् गृहीतवान्।
उक्तवानपि, विचिन्तयन्नपि
तन्न वक्तुमधुना च मेऽखिलं ॥ ५७ ॥

चन्दनागुरुविवर्द्धितेऽनले
ज्योतिषा गगनमाश्रिते तदा।
संस्कृते मृतमहो ! सुदारुणः
एकमेकमकिरं नराधमः ॥ ५८ ॥

इत्थमेव सकलेऽनलाहवे
भस्मतामभिगतेऽभिनिर्म्ममे।
चन्दनेन्धनचयोपरि स्वयं
पुष्पपल्लववितानसंस्तरं ॥ ५९ ॥

तीर्थवारिपरिषिक्तमार्जितं
भूषितं कुसुमपल्लवोत्करैः ।
चर्च्चितं मधुरचन्दनाम्बुभिः
कस्तुरीतिलकमोदितं तदा ॥ ६० ॥

रुक्मिनीसहितसत्यभामया-
श्लिष्यमानमलमेकपार्श्वतः ।
कृष्णचारुवपुरुत्सवप्रदं
तत्र साधु धनकैर्न्यधीयत ॥ ६१ ॥

आज्यवर्द्धिततनौ ततोऽनले
तच्छरीरमिह भस्म कुर्व्वति ।
लब्धुमिच्छुरिव पूततां तदा
सागरोऽम्बुवपुषा तदाददे ॥ ६२ ॥

भस्ममात्रमपि यावदीप्सितं
चित्रपुत्तलिकयेव हा बत !
तावदेव हृतवर्त्मना मया
निर्निमेषमलमीक्ष्यते स्म तत् ॥ ६३ ॥

कृष्णपार्थिवशरीरभस्मनो-
प्यस्तिभाव इह लोपमागते ।
दीर्घनिश्वसनवायुना पुनः
द्वारकामयमनीयत क्षणात् ॥ ६४ ॥

हन्त ! योगमवलम्ब्य विग्रह-
मत्यजत् स वसुदेवतन्मनाः ।
तत्र तस्य निरवर्त्तयं पर-
मन्त्यकर्म्म परमाकुलान्तरः ॥ ६५ ॥

एकदाहमुदघोषयन्ततः
सप्तमेऽह्नि ननु यादवस्त्रियः ।
सार्द्धमेवमपरैरितः पुरः
स्वां पुरं गमयितास्मि नागरैः ॥ ६६ ॥

नागराः ! भवत सज्जिताः खलु
तत्र वज्रमभिषेच्यति द्रुतं ।
यौवराज्य इह मङ्गलं कथं ?
हा ! भवद्भिरपि तत्र गम्यतां ॥ ६७ ॥

तद्दिनेऽभ्युपगते विधेच्छया
सज्जितेषु ननु नागरेष्वहं ।
प्रस्थितिं सकलजीविभिः सम
स्वां पुरं विहितवान् प्रति द्रुतं ॥ ६८ ॥

यं यमेवमजहीम तत्पुरो
भागमाशु वयमाकुलान्तराः ।
तं तमेव सहसा स सागरः
प्लावयत्यमितवारिभिस्तदा ॥ ६९ ॥

यात्रिकेषु परिनिःसृतेष्वलं
हन्त हन्त ! ततएव नीरधिः ।
तामिह स्म सकलां तदा पुर-
मावृणोत्यखिलरत्नराजितां ॥ ७० ॥

अस्तमद्रिमुपगन्तुमुत्सुके
भास्करे पथि महानुयात्रिकैः ।
श्राम्यति क्वचिदलं मयि क्षणात्
निःस्वनः कलकलो महानभूत् ॥ ७१ ॥

सन्निशम्य विषमोल्लसद्ध्वनिं
किं किमित्यचिरमुत्सुकस्ततः ।
निःसृतः शिविरतो व्यलोकयं
सायुधानभिमुखागताञ्जनान् ॥ ७२ ॥

रक्षकस्य तनुतां महीयसीं
वीक्ष्य च स्वबहुतां प्रथीयसीं ।
हर्त्तुमेव रमणीश्च सम्पदः
आगता इति मया व्यचिन्त्यत ॥ ७३ ॥

व्यर्थमत्र नररक्तपातनैः
पूर्व्वमित्यतिविविच्य तान् भृशं ।
रम्यमन्वनयमेव सामभिः
दण्डसाध्वसमदर्शयं ततः ॥ ७४ ॥

किन्तु ते कृतधियो निवर्त्तितुं
नेषुरेव कथमप्यहो ! यदा ।
वर्त्तमानविपदो निवारक-
मायुधं हृदि तदाभ्यचिन्तयम् ॥ ७५ ॥

गो धनुर्नमयितुं वलादपि
न क्षमे स्मृतिपथे च नागतं ।
अस्त्रजातमिति दुःखितोऽभवं
हा ! विधेर्विलसितं तदाप्यलं !! ॥ ७६ ॥

तेषु ता ननु सुगद्य सुन्दरीः
प्रस्थितेषु रमणीर्ह्रतेतराः ।
अन्यदप्यन्हह ! तूर्णमानय-
मत्र, मौनमभजत्ततोऽर्जुनः ॥ ७७ ॥

आमूलतः श्रवणवर्त्मनि वर्त्तमाने
शेषप्रवाहनिचये यदुवंशजानां ।
अल्पाल्पदूरचलितोऽपि कथञ्चिदेषः
शोकः पुनर्हि गुणितो भयमुद्दिदीपे ॥ ७८ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
यादवपरिणामो नाम
द्वितीयःसर्गः ।

(व्यासोपदेशः।)

अनन्तरत्नान्तरनिःसृतोज्ज्वल-
शिखाप्रभानष्टतमःकुलेऽप्यलं।
अपारशोकार्णववाड़वानल-
विसारिधूमाकुलितान्तरे इव ॥ १ ॥

प्रमुक्तकण्ठार्त्तविलापजल्पिते
निरन्तरं रोदनजातशब्दिते।
प्रतप्तनिःश्वाससमुष्णमारुते
शिरःकराघातमहानिनादिते ॥ २ ॥

गभीरचिन्ताव्यसनाहतान् क्वचित्
क्वचिद्विलोलाहतशीर्षवक्षसः।
क्वचिद्धरायां पततः सुमूर्च्छितान्
दधत्यहो ! रोदनतत्परान् क्वचित् ॥ ३ ॥

विकस्वराः पङ्कजमालिका अपि
समुष्णनिश्वासविमर्द्दिता इव।
सुचारुचित्राण्यपि शोककर्षणात्
ह्रयोमुखानीव दधत्यहो ! बलात् ॥ ४ ॥

सुदुःखितानां प्रतिविम्बकच्छलात्
सुदुःखिताः श्रीप्रभृतीः सुरीस्तदा।
दधद्भिराभूज्ज्वलनिर्म्मलान्तरै-
र्निषेविते स्तम्भचयैः समन्ततः ॥ ५ ॥

विषादराहुग्रसनातिविह्वले
चिरस्थिरश्रीप्रतिभाविलोपिनि।
निजेच्छया तत्र पराशरात्मजः
समर्पयामास पदाम्बुजद्वयं ॥ ६ ॥

प्रसन्नताभारसुशोभितं स्थिर-
मचञ्चलभ्रूयुगमायतेक्षणं।
अवातविक्षुब्धसरःपयोजनि-
विड़म्बिवक्त्रं मधुरं दधत् सुखं ॥ ७ ॥

चिरस्थिरोद्दामतड़िद्गुणानिव
हिमालयः शान्तिनिकेतनं स्थिरः।
मृणालसूत्रं वहुमन्त्रसंस्कृतं
वहन्निजांशे प्रियसौम्यदर्शनं ॥ ८ ॥

हरे! हरे! कृष्ण! जनार्द्दन! प्रभो!
भवेश! संसारदुराधिहारक!।
वचोभिरेभिर्म्मधुरैर्मुहुर्मुहुः
भृशं प्रसन्नं भुवनं निनादयन् ॥ ९ ॥

अलोकसामान्यनितान्तदर्शिद-
समीक्षणेनाशु सुधाविडम्बिना ।
स्वतोऽवशानामपि मानसान्यहो !
भृशं तिरश्चां सममानयन् वशं ॥ १० ॥

अशेषतीर्थोपहृतोदकोच्चय-
सुशोभितं ताम्रमयं कमण्डलुं ।
दधत् करान्तःस्थितफुल्ललोहित-
सरोजरम्योज्ज्वलभास्करच्छविः ॥ ११ ॥

जटा दधानो मृदुपृष्ठलम्बिनीः
शशिप्रभश्मश्रुसुशोभितोदरः ।
शुचिस्मितैश्चारुनिरीक्षणैरपि
क्षणेन विश्वं परिषिंचयन्निव ॥ १२ ॥

दृगध्वसंस्थे सति विश्वदर्शिनि
बुधे महर्षौ ननु धर्मसम्भवः ।
द्रुतं स विद्वानुदतिष्ठत स्वयं
नवोद्यमेनेव करे धृतो बलात् ॥ १३ ॥

निपत्य भूमौ चरणौ मुनेस्ततो
ननाम मूर्द्ध्ना विनतेन पाण्डवः ।
ममार्ज च स्वं त्वरया कलेवरं
तदङ्घ्रिपद्माश्रितपूतरेणुभिः ॥ १४ ॥

युधिष्ठिरालम्बितमार्गवर्त्तिन-
स्ततस्तदान्ये विनयप्रसूतयः।
मुनिं प्रणम्यातिपवित्रभक्तिभिः
पदम्बुजस्पृष्टरजांसि भेजिरे॥ १५॥

अर्घ्यं स्वहस्तेन समार्ज्य तत्पदं
यथाविधानं प्रणतो युधिष्ठिरः।
यथोपयुक्तैर्मधुपर्ककादिभिः
समर्च्य तं हर्षमशेषमाप्तवान्॥ १६॥

ततोऽनुनीताय महर्षयेऽचिरं
महामहिम्ने शुभविष्टरासनं।
ससागरद्वीपधरेश्वरोऽप्यहो!
समासितुं संविधिवित् स्वयं ददौ॥ १७॥

कमण्डलूत्क्षिप्तपयःसमूहपैः
पवित्रयन् सर्व्वमिदं समन्ततः।
नृपं समादिश्य पवित्रविष्टरे
मुनिः सुखेनोपविवेश तत्क्षणात्॥ १८॥

ऋषेरनुज्ञा न कदापि कस्यचिद्-
विलङ्घनीयेति विविच्य भूपतिः।
उपाविशच्छ्रिष्यवदन्तिकासने
शुभेऽप्यकिञ्चित्कर एव धार्म्मिकः॥१९॥

अहो ! मुनेरागमसम्भवापि मुत्
समूलमुन्मूलयितुं न चक्षमे ।
प्रभासतीर्थोद्गत-यादवक्षय-
नितान्तकातर्य्यममुष्य भूपतेः ॥ २० ॥

समग्रपृथ्वीरकपते ! चिरं शिव-
न्तवेति पृष्टो ननु पाण्डुनन्दनः ।
विकम्पयन्निश्वसनेन तत्स्थलम्-
प्रचक्रमे वक्तुमनल्पदुःखितः ॥ २१ ॥

गुरो ! महर्षे ! तवपादपङ्कज-
विलोकनम्मे परमं शिवं खलु ।
अनन्तसौभाग्यमनेकजन्मजैः
शुभैरदृष्टैर्घटितं क्षमापहं ॥ २२ ॥

अशेषदुष्कर्म्मनियुक्तचेतसः
कथं शुभादृष्टचयोऽथवा वत ?
अनन्तयज्ञादिपवित्रचेतसाम्
ममादिपुंसां सुतपो जयत्यदः ॥ २३ ॥

भवत्पदाम्भोजरजोनिपातनात्
महाश्रितापि स्फुटदुष्कृता पुरी ।
इयं ध्रुवं सम्प्रति विश्वकीर्त्तित-
पवित्रतीर्थप्रतिपन्नतां श्रयेत् ॥ २४ ॥

अतोऽन्यदस्मिन् कुशलं न विद्यते
गृहीतदुर्भाग्यचयस्य मे चिरं ।
समन्ततोऽभ्यापतिता विपत् स्वयं
क्षिपत्यलं मामुदरेऽमिताननां ॥ २५

ममैव दुर्भाग्यवशान्महेश्वरः
किमु प्रहृष्टौ कुशलस्य विस्मृतिं ।
अवाप ? यन्मां ग्रसितुन्निरन्तर-
ममङ्गलं नो विरमत्यहो ! मुने ! ॥ २६ ॥

ऋषिस्तदोवाच—नृप ! क्व मङ्गल-
मयस्य राज्येऽप्यशुभस्य रेखिका ?
इदञ्जगन्मङ्गलमेव मङ्गल-
मयप्रहृष्टं कुशलेन वस्तुना ॥ २७ ॥

न तत्र वक्तुं किमपीह शक्नुमो-
वयन्तु कूपस्थितशम्बुकोपमाः ।
असीमधातुः समसीमवस्तुनि
ससीमबुद्धिः कथमेव गच्छति ?॥ २८ ॥

यदा यदेवापततीह मङ्गल-
न्तदा तदेवेति विचिन्त्य सादरं ।
अनन्तशास्त्रार्थसरोजभास्कर !
प्रपद्यतां शान्तिरिहापि सद्धृतां ॥ २९ ॥

युधिष्ठिरः साग्रहमब्रवीत्ततो
गुरो ! किमुक्तं ननु सह्यतामिति ?
न सह्यते किं हतभाग्यसंजुषा
न चापि सेहे न च वा सहिष्यते ? ॥ ३० ॥

अनल्पशोकोद्धतवायुसंश्रया-
द्वियाय शोषं नयनाम्बुसञ्चयः ।
दृढम्मनो भाग्यविपर्य्ययाद्भृश-
ञ्जगाम दार्ढ्यं कुलिशादपि स्वतः ॥ ३१ ॥

त्रिकालतत्त्वावलिसाधुविद् गुरो !
कृतन्त्वदग्रे स्मरणैः पुनः पुनः ।
उदन्तजातस्य पुरातनस्य मे,
तथाप्ययं स्मारयतीह नो बलात् ॥ ३२ ॥

विधीच्छया स्वेन च कर्म्मणा पुरा
वनं प्रयाते पितरि क्षमावति ।
अहो ! जनन्यावपि वृक्षवल्कले-
स्त्रपां निराकृत्य किलानुजग्मतुः ॥ ३३ ॥

असंख्यहिंस्राकुलितान्तरे तदा
वनस्थले तत्र च दैव ! हा ! वयं ।
नृपात्मजा वृक्षलतादिसङ्कुल-
तुषारसंघातशिलासु पेतिम ॥ ३४ ॥

नितान्तकष्टेन विलोलशैशव-
मवाहयामामितसप्तकल्पवत्।
नृपात्मजानामपि नो वनस्थली
विहारभूमिः सततं सदाभवत्॥ ३५॥

अरण्यजः श्वापदसञ्चयस्तदा
विहारनित्यानुचरस्तृणोच्चयः।
सुकोमलं नः शयनञ्च वल्कल-
महो! तदासीद्रमणीयमंशुकं॥ २६॥

कदापि तीव्रोन्नतकण्टकक्षता-
वयं भवामः स्म, कदापि हा वत!
क्षुधापिपांसातिविशुष्कविग्रहाः
अगाढनिद्रामुपलेषु जग्मिम॥ ३७॥

कदापि भोज्याशनवञ्चनादलं
कृशाननाः कातररोदनाकुलाः।
अहो! जनन्यौ वलभाग्यवर्जिताः
प्ररोदयामः स्म निरन्तरं ननु!॥ ३८॥

नितान्तकष्टे समुपस्थितेऽप्यहो!
प्रसन्नवक्त्रो जनको महाशयः।
विहाय नः स्नेहमनल्पसञ्चितं
गतो दिवं, नैति यतः कदाप्यहो!॥३९॥

वनस्थलीपादपवल्लरीचयो
रुरोद नो किं विरुवद्विहङ्गमः ।
समानदुःखौघ द्रुहाशु नस्ततः
स्वयं विमातापि चितामवास्रयत् ॥ ४० ॥

कियद्वयं रोदनमाश्रयामहे
तदा, न तद्वक्तुमलं चमामहे ।
दृशा तदानीन्तनसम्भवा हि नो
न भाति भाविच्चणवर्त्मनि स्फुटं ॥ ४१ ॥

अनाथया सम्बलवर्ज्जिताशया
ततो जनन्या ननु भाग्यवर्ज्जितैः ।
तदा सहास्माभिरहो ! नु ? हस्तिना-
पुरि स्म कष्टेन वत ! प्रविश्यते ॥ ४२ ॥

ऋतं—यदेतत् सुभगत्ववञ्चितो
लभेत रत्नाकरसङ्गमेष्वपि ।
समाविलं ग्रम्बुकमेव, नोऽभवत्
हृदादरण्यादपि हस्तिना विपत् ॥ ४३ ॥

सुयोधनस्यामितपापकल्पना
सुतप्रियस्यान्धनृपस्य तत्चणात् ।
अपातयन्नो विषवीचणाध्वनि
विपत्पयोधावतिदुस्तरे मुहुः ॥ ४४ ॥

वृकोदरं भोज्यसमाश्रितं विषं
नु ! भोजयित्वा जलधौ समक्षिपत् ।
सुयोधनः, सा भवतां कृपाबलाद्-
विपद्विपन्नापससार नः पुरा ॥ ४५ ॥

विवासनं हा बत ! वारणावते
प्रदाहनेच्छा जतुमन्दिरान्तरे ।
वने वने पत्रकषायिताम्बुभिः
फलैश्च मूलैश्च शरीरपोषणं ॥ ४६ ॥

कुमन्त्रणा यत्नगृहेऽक्षदेवन-
सभाङ्गने दुर्व्वचशङ्कुपातनं ।
बतास्तभाग्यो द्रुपदात्मजोपरि
कृतापमानैरधुनापि दह्यते ॥ ४७ ॥

पयोभराक्रान्तदृशातिकातर-
मिहापि हा हा ! द्रुपदात्मजाननं ।
कृतापमानानि च भीमपार्थयो-
र्नितान्ततीव्रं व्यथयन्ति मन्मनः ॥ ४८ ॥

सुदीर्घवासो विपिने, परीक्षणे
प्रियानुजानां मरणावलोकनं ।
वने वने वन्यचरेण वर्त्तन-
मबुद्धवासः परभृत्यभावतः ॥ ४९ ॥

ततः कुरुक्षेत्रभुवि प्रमापणं
प्रियाभिमन्योः प्रियसन्ततेरपि ।
सुहृज्जनस्य स्वजनस्य हा ! हत-
कपाल ! पुण्याग्रजजीवनक्षयः ॥ ५० ॥

दिवि प्रयाणं जननीपुरःसर-
गुरुव्रजानां निविड़े वने वने ।
प्रभासतीर्थे यदुसम्भवावले-
श्चिराय निद्राचरमावलम्बनं ॥ ५१ ॥

अतः परं मे सुखमेति मुद्रणं
रुणद्धि कण्ठं कदुवेह हे मुने !
हरे हरे कृष्ण ! समत्यजः कथं ?
कृतापराधोऽहमिति प्रनिश्चयः । ५२ ॥

अनन्तदुःखानलतो निरन्तरं
समुद्धरैव यएकएव नः ।
ऋते तमेकं यदुनन्दनं कथं
धरेम जीवं परमोपदेशक ! ॥ ५३ ॥

त्वमेव पाता द्रुपदात्मजांशुक-
हृतौ तथा भारततीव्रसङ्गरे ।
त्वमेव दुर्व्वाससः एव कोपतः
द्रुमानरक्षो ननु कृष्ण माधव ! ॥५४॥

गुरो ! त्रिकालज्ञ ! विभो ! वदामि कि-
मलं गतं जीवितकप्रयोजनं ।
अहो ! चिरं मे हतकस्य चक्षुषि
विभाति विश्वं तमसेव वाधितं ॥ ५५ ॥

धनञ्जयानीतयदूद्भवामित-
वधूषु काश्चित् पथि दस्युमाश्रयन् ।
वतेतराः काश्चिदहो ! हृताः परै-
रिदं न किं मे दुरदृष्टसूचकं ? ॥ ५६ ॥

मुहुर्विभत्सुर्यतितोऽपि कार्म्मुके
गुणं समारोपयितुं शशाक न ।
पुनः पुनश्चिन्तितमप्यनाविल-
न्तदा स्वमस्त्रं स्मरणे न चागतं ॥ ५७ ॥

इति ब्रुवन्तं नयनोदकोक्षितं
युधिष्ठिरं हा ! स्ववशं नयन्त्यपि ।
चिरेण मूर्च्छा सवलाप्यनिच्छया
जहौ तदानीं कृपया महामुनेः ॥ ५८ ॥

मुनिस्तदोवाच—तवाग्रतो मया
न वत्स ! वक्तव्यलवोऽपि वोच्यते ।
तथापि वात्सल्यवशेन किञ्चन
नितान्तनिर्व्वन्धपरस्त्वमुच्यसे ॥ ५९ ॥

इदं जगद्‌यन्नियतेः कृपाबलात्
प्रजायते तिष्ठति लोपमेति च ।
मतिर्न केषामपि तत्र निर्म्मला
कदापि सन्देहपथेषु घूर्णते ॥ ६० ॥

रेखामपि चपयितुं नियतेः कदापि
शक्नोति शच्यति तथा न शशाक कोऽपि ।
साध्यातिरिक्तविषये ननु तत्र चिन्ता
न त्वादृशां समुचिता परमार्थहन्त्री ॥ ६१ ॥

सृष्टिः स्थितिः प्रलयएव हि विश्वनीतिः
नेयं प्रयोजनमृते घटते कदापि ।
क्षुद्रं करोत्यपि तृणं जगतामशेष-
रम्योपकारनिकरं, न तु संशयोऽत्र ॥ ६२ ॥

सृष्टिः क्रियार्थमपि कार्य्यसमाप्तिकालं
यावत् स्थितिः प्रलयएव ततो नयोऽयं ।
नारायणोऽपि परमन्नियमं विहन्तुं
कृष्णः कथञ्चिदपि नो बलवानिवेष ॥ ६३ ॥

कंसादिदुष्टनृपमण्डलशासितेऽस्मिन्
हा ! भारते किमिव पापमनुष्ठितन्न ?
पापस्य नृत्यमतुलं खलु दुष्कृतानां
हास्यध्वनिर्मतिमतां प्रचुरो विलापः ! ६४

दुर्वृत्तचारुदमनं ननु शिष्टशान्त-
त्राणं महद्भगवती विमला च शान्तिः ।
एतानि तानि मधुराणि विधाय कृष्णः
स्वं रूपमेव लभते स्म जगत्प्रसेव्यः ॥ ६५ ॥

हे वत्स ! शोकमसमं परिहाय कृष्ण-
पादारविन्दयुगले हृदयं निधाय ।
शान्तिं लभस्व परमां , बलवान् प्रमोह-
स्त्वच्चित्तसङ्गममलं न च यातु जातु ॥ ६६ ॥

एभिर्महद्भिरुपदेशवचोभिरेवं
धर्म्मात्मजं ननु कथञ्चन सान्त्वयित्वा ।
भास्वत्प्रकाशसुषमापरिराधितः सः
नारायणं हृदि विधाय मुनिः प्रतस्थे ॥६७॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
व्यासोपदेशो नाम
तृतीयः सर्गः ।

( राज्यभारसमर्पणं । )

अथ सादरमाश्रितानुजान्
प्रियया सार्द्धमलं युधिष्ठिरः ।
मधुरेक्षणजीवनैरिव
स्नपयन् धीरमवोचदीप्सितं ॥ १ ॥

वचनं मम जीवनाधिकाः !
परिहृत्य श्रवणाध्वनि स्फुटं ।
अवधारयताद्यनन्तरं
ननु कर्त्तव्यपथं निराविलं ॥ २ ॥

परमात्मविदो मुनेः शिव-
उपदेशः श्रुतएव, मन्यते ।
न नितान्तगभीरकाशयो
विमलां वो मतिमत्यवाहयत् ॥ ३ ॥

विषमायुधकर्म्म नो गतं
परिपूर्त्तिं यदहो ! न संसृतौ ।
उदियाय विभत्सुना स्मृत-
मपि हा हा ! भृतमेकचेतसा ॥ ४ ॥

परिसंक्रमकाल एष नः
उपतस्थे सहसेति निश्चितं ।
अतएव विहाय कामनां
परमप्रस्थितिमीप्सुरस्म्यहं ॥ ५ ॥

सुखमन्वभवाम यं विना
क्रियदप्यत्र निराविलं क्षणं ।
न हि कृष्णामृते चिरं कथं
तमहो ! ग्रक्रम एव जीवितुं ॥ ६ ॥

विजहामि विभूतिकामना-
मवलम्ब्य परिश्रिष्टवर्त्म च ।
इह यूयमपि स्त सज्जिताः
यदि विघ्नो घटते न कश्चन ॥ ७ ॥

इति निश्चयमाश्रिते तदा
विरते धीरतमे युधिष्ठिरे ।
अनुजा दयितापि तत्क्षणात्
मृदुबद्धाञ्जलि तावदब्रुवन् ॥ ८ ॥

भवने विपिने महागुरो !
परमोऽस्माकमलं त्वमाश्रयः
भवदङ्घ्रिसरोजसेवकाः
अनुगच्छाम इहाश्रिता वयं ॥ ९ ॥

इति भाविनि कर्म्मणि स्फुटं
सकलैस्तैरवधारिते तदा ।
ननु वज्र-परिक्षितौ स्वयं
मृदुवाचोपदिदेश भूपतिः ॥ १० ॥

सुकुमारपवित्रवृत्तकौ !
परमोदारकुलप्रदीपकौ !
युवयोर्न मनः स्खलिष्यती-
त्यपि जानन् किमपि ब्रवीम्यहं ॥ ११ ॥

घटतेऽल्पजनस्य कर्म्मणि
गुरुसंसर्गसुखं निराविलं ।
विरहोऽप्यतएव नश्वरं
युवयोर्न व्यथयिष्यते मनः ॥ १२ ॥

यदुनन्दन ! वत्स ! सादरं
नगरे पूर्व्वमधिष्ठिते मया ।
तव साध्वभिषिक्तइष्यते
नु ! परिक्षित् ! तव हस्तिनापुरि ॥ १३ ॥

चिरभोगविलासवासना
प्रययौ पूर्त्तिमलं, स्पृहा च्युता ।
इति राज्यसुशासनं धुरं
गमयामो भवतोः कराम्बुजं ॥ १४ ॥

परिहाय विलाससाधनं
नु ! महाप्रस्थितिमाश्रयामहे।
प्रतिपालयितव्यमेव वां
किमपि व्यक्तमलं ब्रवीम्यहं ॥ १५ ॥

नवयौवनसम्भवन्तमः
सविता व्योमसमाङ्गेऽपि न।
क्षमते परिहर्त्तुमुच्छिखो
मणिरप्यत्र न बाधितुं प्रभुः ॥ १६ ॥

चिरचञ्चलचित्तशालिनां
युवकानामपि हृक्सुशोभिनां।
दूरमेव निरन्तरं बला-
न्नयेत प्रतिकार्य्यमन्धतां ॥ १७ ॥

विषमा मदसम्भवाखिला
विषयास्वादभवा च वासना
नयशास्त्रविबुद्धमप्यलं
क्षणमुच्छ्रावयितुं क्षमा पथः ॥ १८ ॥

धरणीसुखसन्निपातजां
दृढ़निद्रामनुरागलेपनं।
अवलेपमपोह्य यश्चिरं
क्षमते हातुमलं सत्तमः ॥ १९ ॥

नवयौवनमग्र्ययोग्यता
प्रभुता रूपमनल्पमुज्ज्वलं ।
सकलाविनयस्य विन्दते
कुलवेश्मत्वमहो ! चिरन्तनं ॥ २० ॥

पदमर्पयतोऽस्य यौवने
बहुशास्त्रामृतशोधिनापि धीः ।
उचितेतरवासनावशात्
कलुषत्वं सहसोपगच्छति ॥ २१ ॥

युवकत्वभुवीह शम्बर-
रिपुवाणः प्रसभं लयं व्रजन् ।
विनयस्मृतिधीरतागुणान्
ननु निःसारयितुं समीश्वरः ॥ २२ ॥

न चिरान्वयता कुकर्म्मणो
न कदाचारनितान्तवेश्मता ।
विनयीतरता न वर्त्तितुं
युवयोरन्तिकभुव्यपि प्रभुः ॥ २३ ॥

युवयोरभिमानमत्तता-
लवमप्यत्र न वर्द्धयेद्धनं ।
अवलेपचयः श्रुतीक्षणे
घटयेन्नैव परामुदासितां ॥ २४ ॥

कमलात्यविवेकिनां नृणां
मद-रागौ चलताञ्च वक्रतां ।
परिमोहनशक्तिमुग्णतां
सममुत्पादयितुं समर्हति ॥ २५ ॥

शतदुःखसुरचिताप्यहो !
विदितान्येव पलायते क्षणात् ।
चिरसञ्चितमप्यनाविलं
नृपलक्ष्मीः प्रणयं न पश्यति ॥ २६ ॥

कमलेयमलं सुशीलयोः
युवयोर्नो परुषत्वमुद्गतं ।
ननु निष्ठुरतामपि स्वतः
सहते शापयितुं कथञ्चन ॥ २७ ॥

कुरुतं सुचिरं तथा युवां
कमलेयं न पलायते यथा ।
न च विस्मरतीह सादरं
प्रणयं वंशपरम्परागतं ॥ २८ ॥

ननु वेद्मि —भवद्गुणावली-
दृढवद्धेयमलं चलाप्यहो !
गणयेन्मधुरां विदग्धता-
मनुवर्त्तितं सुशीलमुत्तमं ॥ २९ ॥

चिरशान्तिविधायिनी रमा
कमलं क्षीरनिधिं हरिं यथा।
गुणगौरवशीलशालिनौ
सुधियौ वां चिरमाश्रयेत्तथा॥ ३०॥

विदधातु पदं हरिप्रिया
निलये वां रमणीयदर्शने।
जनयत्वविराममुत्सवं
चिरशान्तिं घटयत्ववाधितां॥ ३१॥

क्रतुभिस्त्रिदिवाधिवासिनः
प्रणयाच्चाप्रतिपालनैर्गुरून्।
परितोषयितुं कदापि नो
विरमेतं नयमन्त्रदीक्षितौ!॥ ३२॥

विनियोजयतं स्थिरां मतिं
ननु धर्म्मे विमलामृतव्रते।
नयवर्त्मनि साधुसेविते
व्रजतं नैव कदापि विस्मृतिं॥ ३३॥

बहुशास्त्रविदो दृढव्रताः
विनयाढ्याः सरलाशयाः स्थिराः।
विधिसाधुविदः पुरोहिताः
प्रभवः सत्कृतिपूर्णकाङ्क्षयोः॥ ३४॥

बलवान् मतिमाञ्जितेन्द्रियः
परिगूढेङ्गितबोधनक्षमः ।
बहुशास्त्रविदात्मसन्निभः
इह मन्त्री प्रथमः प्रभुश्रितः ॥ ३५ ॥

न निवेदयतं कदाप्यलं
निजमन्त्रं प्रथमं फलाप्तितः ।
न कदापि विलम्बमाप्नुतं
शुभकृतेऽत्नसवद्विचक्षणौ ! ॥ ३६ ॥

अनुसृत्य परीक्ष्य च स्वयं
विनियुज्य स्वबलं यथाबलं !
सनयं सदुपायसाधनैः
प्रकृतीः प्रापयतं स्ववश्यतां ॥ ३७ ॥

न खरं मृदु वापि केवलं
अयतं शासनमाशु सन्ततं ।
उभयाश्रितमिश्रणोद्भवैः
सुयशोभिश्चिरमेव राजतं । ३८ ॥

अधिवासधरां निरन्तरं
सुजनस्फूर्त्तिविराजितामलं ।
परभीमकरग्रहच्युतां
विमलस्वच्छविभां विधास्यथः । ३९ ॥

निविड़ानवधानता सदा
सुकुमारौ! ननु दीर्घसूत्रता।
अलसत्वमपि क्षिपन्तु नो
नयवन्तौ! कमलाकृपावहिः॥ ४०॥

इह सज्जनसेवनादिवत्
कृतकृत्यत्वसुखैषिणां नृणां।
अनुकूलसुशासनं खलु
कुशलामोदसुकीर्त्तिकारणं॥ ४१॥

सततावहितेक्षणं पर-
मलसत्वस्य चिराय वर्जनं।
प्रबलेन्द्रियवश्यतोदयः
सुखशान्तिप्रनिदानमीच्यते॥ ४२॥

इह कामजकोपजाः स्वतो-
वत! दोषा दृढमूलमप्यलं।
धरणीश्वरमप्यहो! क्षणाद्-
भ्रशमुन्मूलयितुं समीश्वराः॥ ४३॥

कुशलं विमलं समिच्छता
ननु सप्ताङ्गकराज्यसम्पदि।
प्रभुना सततं प्रयत्यते
समुपायांश्चतुरः सुसाधितुं॥ ४४॥

सुजनो रिपुरप्यतिप्रिय-
स्तनयोऽप्यप्रिय एव दुर्मतिः ।
गुणपक्षविधायिभूभुजां
नयवर्त्मन्यतिसुस्थिरात्मनां ॥ ४५ ॥

युवयोर्मधुरोज्ज्वलं यशो-
भजतां दिक्सुभकर्णपूरतां ।
अतिदक्षिणसत्यवादिता
जगतामस्तु सदातिशायिनी ॥ ४६ ॥

भवतोरभिषेकवारिभि-
र्भ यदाक्षिणगलयो घटेत न ।
दहनाङ्कतिधूमसञ्चये-
र्मलिनत्वं हृदये न चापतेत् ॥४७ ॥

हृदये युवयोः क्षमा परा
कुशसम्मार्ज्जनकेन दूष्यतां ।
विमलैः खलु सात्विकैर्गुणै-
र्मधुरैरोष्ठमेव दृश्यतां ॥ ४८ ॥

परदाररुचिर्विदग्धता
विटधूर्त्तामितवाक्प्रतारणा ।
मदिराभिरतिर्विलासिता
भवतोस्तिष्ठतु नापि सन्निधौ ॥ ४९ ॥

नयविद्भृशनिन्दनं चिर-
मुपहासो विषमो नृणामलं ।
गुरुधिक्कृतिरात्मगर्हणं
न धुरां क्वापि भजेयुरुत्सुकौ ॥ ५० ॥

विदुषामनुशोचनं महद्-
वनितालोभनमुल्वणं क्वचित् ।
मदनोद्यमनं विडम्बना
कमलायान विलोकयन्तु वां ॥ ५१ ॥

ननु वंशपरम्परागतां
धुरमस्यावहतं. द्विषां शिरः ।
सुनतं कुरुतं, स्वबान्धवान्
सुखमारोपयतं समुन्नतौ ! ॥ ५२ ॥

एतदन्यदपि सादरं मुहु-
र्युक्तियुक्तमुपदिश्य मौनितां ।
आश्रितस्य धरणीभुजः पदौ
तौ सुषिच्य नयनाम्बुनोक्षतुः ॥ ५३ ॥

कुत्र नौ परिविकीर्य्य सत्वरं
देव ! पालक ! यियासि स्वयं ।
पुष्पमाश्रयतरोश्च्युतं भव-
नूनमेति परिशुष्कतां क्षणात् ॥ ५४ ॥

अब्रवीत् सकरुणं युधिष्ठिरः—
साधुवृत्तविनयार्जवान्वितौ !
पूर्णतामुपगते दिने क्वचित्
स्थातुमत्र किमु कोऽपि शक्नुयात् ? ॥ ५५ ।

अस्माकमेषसमयः परिपूर्ण एव,
तस्मान्नयो न इह नो सुचिरं विलम्बः ।
आचार्य्य एष कृपइङ्गितविद्युयुत्सु-
र्नूनं शिवं सततमेव विधास्यतो वां ॥ ५६ ॥

इत्यादिभिर्बहुविधैर्वचनैर्निवर्त्त्य
संस्थाप्य तावभिषिषिंच सुखेन राजा ।
आहूय मङ्गलपराः प्रकृतीः समन्ता-
दुत्क्वानिजेप्सितविधौ मन आततान ॥ ५७ ॥

इति श्री अन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
राज्यभारसमर्पणं नाम
चतुर्थः सर्गः ।

( पर्य्यटनं । )

ततो भुवः सागरशोभितायाः
पतिः समुन्मुच्य सुभूषणानि ।
क्रोड़े प्रकृत्याविलयेच्छयेव
स वल्कलं सादरमादधाति ॥ १ ॥

भीमार्ज्जुनौ माद्रिसुतौ कुमारौ
मही-सपत्नी द्रुपदात्मजापि ।
विहाय हाहा ! चिरभूषणानि
वृक्षत्वचं शिश्रियुरक्रमेण ॥ २ ॥

महीरुहत्वग्भिरपीह तेषां
शोके व्यपाकर्त्तु ममामभिख्यां ।
स्वाभाविकीं नैव, सुशैवलैस्ते-
रप्यत्र किं स्याज्जलजं विरूपं ? ॥ ३ ॥

यथाविधानं प्रविधाय शेषं
क्रतुं, चिरायोज्ज्वलसंस्कृतानि ।
पयःसु पुण्येषु विनिक्षिपन्तः
कृतार्थतामापुरिव स्वतस्ते ॥ ४ ॥

ततो महाप्रस्थितिकालवेश-
विशेष-साधुग्रहणेन तेषां।
ध्रुवं तदेकान्तनिविष्टचित्ताः
प्रजाः समार्त्तत्वमहो! प्रभेजुः ॥५॥

रुग्नस्य वृद्धस्य जरातुरस्य
वालस्य शिष्टस्य वुधस्य साधोः।
दीनस्य भृत्यस्य च योषितोऽपि
स्थानं तदा तद्ध्वनितं विलापैः ॥६॥

तदा प्रतिष्ठासुजनाननानि
विना न कुत्रापि सुलोकिरे ताः।
प्रशान्तयः, केवलमत्र सर्व्वं
लेभे विषादत्वमिव क्षणेन। ७॥

हा हा! तदा शोकविलुप्तधैर्य्या
चिरप्रसन्ना ननु हस्तिनापि।
पुरी विशाला चिररोदनालि-
मिषाद्रुरोदेव चिराय तारं ॥८॥

तदा समन्ताद्विलुलोक एव
विषादपाथोधिमहातरङ्गः।
सुजीर्णपत्रावलिपातनेन।
नेवाम्बु वृक्षा अपि तत्यजुः किं? ॥९॥

एवम्विधं तारविलापनादं
भित्त्वापि हा हा ! खलु निःसृतोऽसौ ।
गभीरचेतोभरवेगजन्मा
दयाप्रसूतिर्ध्वनिरुद्दिरोपि ॥ १० ॥

चिराश्रितान् नः प्रतिपालकेश !
किमर्थमेतान् सकलं जहासि ?
हे देव ! कस्यैव कुमारहस्ते
समर्प्य नो गन्तुमहो ! प्रवृत्तः ? ॥ ११ ॥

अस्माकमेषां शरणागतानां
दृढ़ापराधः किमु कोऽपि दृष्टः ?
अहो ! यदस्मान् सुचिराय दृष्टि-
पथाद्विदूरे पतितान् करोषि ॥ १२ ॥

विना भवन्तं ननु को दयाढ्यो
रोगेषु पथ्यं व्यसनेषु शान्तिं ।
क्षुधासु भोज्यं सरसं शरण्य !
दास्यत्यलं नो हतभाग्यकेभ्यः ॥ १३ ॥

हताः प्रदग्धा अपि मर्दिताः स्मो-
नितान्तदुर्भाग्यचयेन नूनं ।
अस्माकमस्मिन् दिवसे नितान्त-
दुष्कर्मणां हा ! परिणाम एषः ॥ १४ ॥

विधातुमेतत् करुणार्द्रचित्त !
कथं प्रवृत्तः ? कथमाश्रितान् नः।
निकाममुन्मूलयितुं सुखेन
समीहसे ? कः परमोऽपराधः ? ॥ १५ ॥

किं दुष्कृतं राजति वर्त्तमानं ?—
येनैतदेवापतितं बताद्य।
अस्माभिरस्मिन् किमकृत्यमेव-
मनुष्ठितं ? यत्परिपाक एषः ॥ १६ ॥

हा ! भूतधात्रि ! त्वमनाश्रितासि,
हा ! हस्तिने ! त्वं खलु वञ्चितासि।
हा हा ! प्रजाः ! मित्रविवर्जिताः स्थ,
हा ! पौरवासिन् ! मुषितोऽसि दैवैः ॥१७॥

क्षणान्त्वपेक्षस्व—चिराश्रितानां
किलानुयानं, वयमप्यखेदं।
यामो, विना तत्र भवन्तमत्र
प्रभक्ष्महे स्थातुमपि क्षणं न ॥ १८ ॥

अदृष्टपूर्व्वानिव नो विहाय
प्रभो ! किमेवं सहसा प्रयासि ?
कुतस्त्वमद्यैव सुनिष्ठुरत्व-
वत्सलमभेयषि ? नु ! कोऽपवादः ? ॥१९॥

ऋते भवन्तं क्व वयं व्रजामः ?
याचामहे कं ? शरणं कमस्मिन् ।
उपेम दृष्टं ? नु ! कमाश्रयामः ?
सेवामहे कं ?—वद चिन्तयित्वा ॥ २० ॥

शून्यादिशो नो दृश नो विधेहि,
चक्षुष्मतोऽस्मान् प्रकुरुष्व नान्धान् ।
अस्माकमग्रे न सति जीवितेऽस्मिन्
निरर्थके हा ! विहिते फलं किं ? ॥ २१ ॥

प्रसीद पूर्णां कुरु वासनां नः,
सन्दर्शयैतत् स्थिरवत्सलत्वं ।
वतेषदप्यद्य विलोकयैताः
भक्त्यानुरक्ताः प्रकृतीः सुदृष्ट्या ॥ २२ ॥

उपायहीनाश्चिरदुःखिताश्च
निराश्रयानाथविवर्जिताश्च ।
यथा वयं नैव चिरं भवामो-
विधीयतां देव ! तथा कृपाभिः ॥ २३ ॥

अहो ! महाप्रस्थितिपूर्णरक्त-
मचञ्चलं मानसमप्यखिन्नं ।
अलक्ष्यभावेन युधिष्ठिरस्य
विलापवाग्भिः खलु कम्पते स्म ॥२४॥

धृत्वा कथञ्चित् चणमथ राजा
न्यायात्मके वर्त्मनि वर्त्तमानः ।
धर्म्मात्मजस्ताः प्रनकैरयत्न
प्रजा अवादीत् करुणाभिषिक्तं ॥ २५ ॥

भक्तानुरक्ताः सुतनिर्व्विशेषाः
यूयं सदास्मत्कुशलार्थिनश्च ।
अस्माकमत्यन्तमिवैकमार्गे
युक्तो न वः कण्टकजातपातः ॥ २६ ॥

मन्यामहे—नूनमयं धरेशो
विस्मारयिष्यत्यलमेव युष्मान् ।
अस्माकमस्मिन्, न वियोग एषः
दुःखं समुत्पादयितुं चमेत ॥ २७ ॥

क्लिष्टाननं वः सुविलोकयन्त्राः
वतालमस्मभ्यमहो ! चिराय ।
स्वर्गोऽपि कल्याणसमाजहेतु-
रोचिष्यते नैव समुत्सुकेभ्यः ॥ २८ ॥

अतः प्रसन्नाननवाग्भिरेव
विसर्ज्य गन्तव्यपथप्रवृत्तान् ।
अस्मान् निवृत्ताभवत प्रहर्षै-
रेतं नृपं पश्यत साधुदृष्ट्या ॥ २९ ॥

एभिः ससारैरितरैरपीह
धीरैर्वचोभिर्ननु सान्त्वयित्वा।
कथञ्चिदेतान् मनुजान्, नृपर्षिः
सम्भ्रान्तदारो निरगात् स्वपुर्य्याः ॥ ३० ॥

अनन्तपाथेयमिवात्र चारु
चक्षुर्मनोऽपि प्रणयास्पदानां।
आदाय दारैः सहितोऽनुजैश्च
युधिष्ठिरोऽग्रे क्रमशः प्रतस्थे ॥ ३१ ॥

एको महाश्वा प्रियदर्शनोऽसा-
वनेकशः साधु निवारितोपि।
अहो! चिरप्रस्थितिमीहमानं
नृपं तमेवानुससार भूयः ॥ ३२ ॥

तेषु क्रमेणाथ सुदृष्टिमार्ग-
मतीतवत्सु स्वयमेव पौराः।
निश्वस्य दीर्घं घनकैर्ब्रुवन्त-
स्तास्ताः कथाः भिन्नियुरालयं स्वं ॥ ३३ ॥

तदा पुरी सा मनुजाकुलापि
नादैः समस्तैरपि हीयमाना।
अभीष्टभर्त्तृव्यसनोत्थदुःखे-
श्चिरं मुमूर्च्छेव विषादपूर्णा ॥ ३४ ॥

अथ प्रसन्नो ननु धर्म्मशीलो
युधिष्ठिरः सानुचरः क्रमेण ।
शैलान् समुद्रान् नगरानसंख्यान्
ग्रामानतिक्रामति सत्वरं स्म ॥ ३५ ॥

वनान्यहो ! कृत्रिमकाननानि
सरांसि रक्तोत्पलभूषितानि ।
द्विरेफमालामितसंस्तुतानि
दृष्ट्वा सऐन्द्रीं हरितं प्रतस्थे ॥ ३६ ॥

स्वाभाविकं क्वापि सुखं समन्तात्
ते कृत्रिमं क्वापि गिरामतीतं ।
सौन्दर्य्यमालोक्य दृशां निमेषं
नितान्तविघ्नं स्म विदन्ति नो किं ? ॥ ३७ ॥

मनोहरे वर्त्मनि काननेऽपि
कुत्रापि शैलोन्नतिगर्व्वखर्व्वं ।
विधातुमिच्छन्तमिवाभ्रचुम्बि-
तरुं मुहुर्वीक्ष्य मुदं ययुस्ते ॥ ३८ ॥

एषां पथि क्वापि मनोहराणि
श्रेणीनिबद्धानि सुखास्पदानि ।
अनन्तवस्तूनि चिरस्थिराणि
हर्षप्रदाने विरमन्ति न स्म ॥ ३९ ॥

कुत्रापि मार्गे व्रततिः सुखेन
रसावशा पुष्पभरप्रणम्रा ।
शनैः शनैः पादपमाश्रयन्ती
चक्षुष्मतां चित्तमहो ! जहार ॥ ४० ॥

कुत्रापि मार्गे गिरिपङ्क्तिवक्षो-
विनिःसृताः स्नेहपयो वहन्त्यः ।
रत्नाकरोच्छ्वासभरास्तटिन्यो-
निरन्तरं तान् स्म सुनन्दयन्ति ॥ ४१ ॥

क्वाप्यध्वनि प्राप्तपवित्रभावान्
उत्तुङ्गशैलोपरि वर्त्तमानान् ।
देवर्षि-राजर्षि-महर्षिसंघान्
दृष्ट्वा परां शान्तिमुपागतास्ते ॥ ४२ ॥

पथामदूरेऽप्यतिभीमकायान्
कर्त्तुं प्रवृत्तानिव कुक्षिगर्त्तं ।
विश्वं भुजङ्गानपवासनास्ते
वीक्ष्यापि नो भीतिवशत्वमापुः ॥ ४३ ॥

पन्थाः क्वचित् सर्पशिरोमणीनां
विभाविभातो भृशमुद्दिदीपे ।
नष्टामृतांशावपि यत्र रात्रौ
वर्षद्घने ध्वान्तलवोऽपि नासीत् ॥ ४४ ॥

सुदर्शनं भीषणमप्यसंख्यं
स्थानन्त्वतिक्रम्य शनैः शनैस्ते ।
प्रलेभिरे लोहितसागरस्य
तटं समन्ताद्ददृशुश्च शोभां ॥ ४५ ॥

तदा शिखी मानुषवेशधारी
प्रशान्तमूर्त्तिर्द्रुतकाञ्चनाभः ।
सुविस्मितांस्तान् विदधन्मुमुचून् ।
शुचिस्मितः सस्मितमेवमूचे ॥ ४६ ॥

हे पाण्डवाः ! शान्तिजुषां निदर्शाः !
यूयं सुधन्या भुवनान्तराले ।
चित्रं चरित्रं भवतां प्रशस्त-
महो ! सुराणामपि वाञ्छनीयं ॥ ४७ ॥

संसारलिप्सा विषमप्रभा या
योगायनस्यापि सुकामनीया ।
प्रतत्यजे सापि च यद्भवद्भि-
स्तद्यूयमेव प्रथमानुकार्य्याः ॥ ४८ ॥

विदन्तु मां वह्निमिमं भवन्तो-
भद्रार्थिना खाण्डवदाहकाले ।
गाण्डीवमेतद्धनुरर्जुनाय
मया प्रदत्तं वरुणाद्गृहीला ॥ ४९ ॥

अहो ! महाप्रस्थितिदीचितस्य
वीरात्तगाण्डीवशरासनेन ।
प्रयोजनं किं ? न सुधाङ्कहान्तः
सुशोभते तिग्मविषप्रतापः ॥ ५० ॥

इहाखिदानीं वरुणाय जिष्णुः
सुखेन गाण्डीवमिदं धनुस्तत् ।
अपार्थिवं रत्नमिहेच्छतस्तत्
किं चात्र सन्त्यासकवस्तुनाहो ! ॥ ५१ ॥

युधिष्ठिरादेशत एव पार्थो
गाण्डीवमेतत् सलिले सहर्षं ।
निक्षिप्तवतेव तिरोबभूव
हुताशनः सत्वरमुज्ज्वलाभः ॥ ५२ ॥

ततः क्रमाद्दक्षिणदिक्श्रितास्ते
कृतोपवासाः विनिवृत्तिकामाः ।
योगैकनिष्ठा लवणार्णवस्यो-
त्तरेण तीरेण पथा प्रजग्मुः ॥ ५३ ॥

एलालतापल्लवशोभितेन
वृहत्तरङ्गाम्बुपरिष्कृतेन ।
तालीवनश्यामजितान्तरेण
फलाढ्यपूगावृतपार्श्वकेन ॥ ५४ ॥

फलातिभारानमितस्वशाख-
महीरुहस्पष्टविभूषितेन ।
अम्लातपुष्पावलिसञ्जितेन
लतावलावारितभास्करेण ॥ ५५ ॥

नवीनकीलालधरोपहासि-
नितान्तनीरन्ध्रकशस्यपङ्क्त्या ।
प्रतिस्थलं सुन्दरशोभितेन
स्वभावदेवीनियतालयेन ॥ ५६ ॥

प्रवालपुष्पोच्चयशोभिवल्ल्या
पदे पदे चारुसमर्चितेन ।
द्विजालिगीतालिनिनादितेन
पत्रोत्करेणावृतकातपेन ॥ ५७ ।

अहो ! प्रकृत्या निभृतातिचारु-
विचित्रकुञ्जेन पथा प्रयाय ।
चिरेण पान्थाः नयनातिथिं ते
तां द्वारकां लुप्तविभां प्रचक्रुः ॥ ५८ ॥

रत्नाकराम्भःकवलीकृतां तां
हा ! नामशेषां भृशनिर्निमेषं ।
चिरं निरीक्ष्यातिदयार्द्रचित्ता-
भृशं गलन्तीव तदा स्वतस्ते ॥ ५९ ॥

अहो ! न कस्यापि मुखात्तदानी-
मेकापि वाणी ननु निर्जगाम ।
उच्छ्वासगम्भीरविषादमूर्त्ति-
स्ते केवलं कुक्षिगता इवासन् ॥ ६० ॥

दीर्घोष्णनिश्वासभरेण शून्य-
निरीक्षणेनापि महाविलेन ।
विभावयेनामितचिन्तनेन
निन्युः क्षयन्ते समयं सुदीर्घं ॥ ६१ ॥

संसारभोगनिचयातिविरागिणस्ते
उष्णोष्णनिश्वसनभारचयेन शोकं ।
दूरं विधाय कथमप्यतिधैर्य्यशीलाः
व्यासाश्रमाभिमुखएव गतिं प्रचक्रुः ॥ ६२ ॥

इति श्रीअन्नदाचरण तर्कचूडामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
पर्य्यटनं नाम
पञ्चमः सर्गः ।



( तपोवनाधिगतिः । )

एलया रुचिरराजिवद्धया
छायया ललितयातिमात्रया ।
सुन्दरं सुमधुरं तपोवनं
धार्म्मिकैः समधिगम्यते स्म तैः ॥ १ ॥

शष्पराजिकलितं लतोच्छ्रितं
पल्लवारुणमलं मनोहरं ।
नीलपत्रविनिवारितातपं
शान्तमिष्टनववस्तुरञ्जितं ॥ २ ॥

नागवल्लिपरिशोभिपूगकं
स्वच्छवारिसरसातिशोभितं ।
श्लिष्टशाखतरुवीरुधाश्रितं
निम्नगोर्म्मिकरलिङ्गितान्तकं ॥ ३ ॥

राजहंसगतिभूषितान्तरं
पक्षिजातकलनादनन्दितं ।
नीलकण्ठकलताण्डवाद्भुतं
नव्यनव्यसुषमातिशोभितं ॥ ४ ॥

कुञ्जमञ्जुलपियालमण्डितं
चारुचम्पकतमालशोभितं
एकहायनकुरङ्गसन्तति-
दीर्घदीर्घमधुरप्लुतिश्रितं ॥ ५ ॥

माधवी विपिनवृक्षसुन्दरी
धीरदक्षिणसमीरकम्पिनी ।
कामपीह सुषमां पदे पदे
ताण्डवव्यसनिनी निषिवते ॥ ६ ॥

कान्तकोमललवङ्गवल्लरी
मन्मथामृतभृतो विभावरी ।
सौरभं किरति चारु सन्ततं
प्राणमानसविलोलतस्करं ॥ ७ ॥

पङ्क्तिवद्धवकुलाः क्वचित् क्वचिद्-
यान्ति चारुघननीलवप्रतां ।
किंशुका दलितपुष्पशोभिताः
नूतनध्वजविकाशतामिह ॥ ८ ॥

कश्चिदत्र वसुधारुहः क्वचित्
सुन्दरैः कुसुमशोभिपल्लवैः ।
श्यामलं वपुरतीव भूषितं
संविधाय भवतीह चित्रवत् ॥ ९ ॥

बिल्व-निम्ब-सहकार-सन्ततिः
दाड़िमी-पनस-काञ्चनावली।
ताल-चम्पक-शिरीष-संहतिः
राजते नववियोगयोगतः॥ १०॥

श्यामलो निविड़पत्रराजितः
श्रेणिबन्धमधुरो वटस्तरुः।
आतपत्ररुचिमोषिपल्लवं
संप्रसार्य्य समुपैति साधुतां॥ ११॥

आगताय पथिकाय सादरं
सन्निधाय फलमूलसंहतिं।
पादपा अपि निरन्तरं स्वतः
किं न यान्ति भृशमातिथेयतां?॥ १२॥

सर्व्वमत्र किमु चारुमूर्त्तिम-
च्छान्तिराशिभिरहो! प्रजासृजा।
निर्म्मितं? यदमलं समन्ततः
शान्तिमेव सकलं किरत्यलं॥ १३॥

तुङ्गतीरमतिपूतनीरकं
पङ्कजावलिरजोविराजितं।
खेलदम्बुचरनादितं सरः
कं करोति ननु नो समुत्सुकं?॥ १४॥

वालकस्य चपलत्वपीड़ितः
केशरीह कुतुकात् कियत्पदं ।
दूरमेत्य पथितः सुखं स्वपन्
भीतिहीन इव जृम्भते चिरं ॥ १५ ॥

केऽपि योगिशिशवो मृगादन-
केशरं कुतुकतः स्पृशन्त्यल ं ।
केऽपि लोलमतयः करं मुहुः
वेशयन्ति हरिवक्त्रगह्वरे ॥ १६ ॥

सप्तपर्णमणिवेदिकोपरि
सुन्दरीभिरिह लोलदृष्टिभिः ।
दीव्यति त्वसनवञ्चितः समं
सुन्दरं किमपि हारिणः शिशुः ॥ १७ ॥

रक्तपल्लवमहीरुहादधः
कापि गाढ़रभसा मृगं शिशुं ।
श्लिष्यति स्वकुतुकात्, क्षणे क्षणे
चुम्बति प्रविरलं भ्रमत्यपि ॥ १८ ॥

केशरी सततमत्र हस्तिनी-
पोतजातमविलम्बितं मुदा ।
स्नेहतः स्वशिशुभिः समं मुहुः
लेढ़ि तैरसनया क्षुधाकुलैः ॥ १९ ॥

क्वाप्यवातजलधिं विडम्बयत्
सर्व्वमेव वचसामगोचरं ।
धीरतां स्थिरविभां गभीरता-
मेत्य चारु चिरमेव राजते ॥ २० ॥

बालिका वकुलमूलसंस्थिता
गायतीह मधुरं मृदु क्वचित् ।
कापि चारुसुमनांसि मालिकां
कौतुकेन विदधाति सुन्दरी ॥ २१ ॥

काप्यशोकतरुमूलसंस्तरे
श्वेतरक्तकुसुमाभिशोभिता ।
भावसिन्धुविनिविष्टमानसा
देवतेव सुमनोमयी स्थिता ॥ २२ ॥

बालकाः सरलभावमूर्त्तयः
साधु साधु खलु बालभाषया ।
अक्रमन्त्वविरलं किमप्यहो !
संब्रुवन्त इह नन्दयन्त्यलं ॥ २३ ॥

बालिका इह न बालका अपि
किं विहङ्गनिचये मृगी पशौ ।
वल्लरीषु कुसुमेषु पल्लवे
स्नेहतर्पणसुधाः किरन्त्यलं ? ॥ २४ ॥

शुष्कशाखिविपिने पयोमयी
बालिका सुभगिनी लतावलेः ।
संक्षुधार्त्तविहगेऽन्नदा स्वयं
कन्यका च जननी च रोगिणः ॥ २५ ॥

पुष्पपल्लवलताभिमण्डित-
शाखिमूलमधिगम्य भावतः ।
एकयैव मधुरा कयाचन
स्मर्य्यते प्रकृतिरत्र लीलया ॥ २६ ॥

व्याजतो मधुरगीतिसन्ततेः
वृक्षशेखरवसद्विहङ्गमः ।
विश्वधात्पुरुषं मुहुर्मुहुः
स्तौति चिन्तयति संस्मरत्यपि ॥ २७ ॥

स्वार्थभातिरिह नैव विद्यते
संसृतेः, कुटिलता न तिष्ठति ।
चिह्नमात्रमनृतस्य नो, न वा
द्वेष-मोह-मद-कामकारिताः ॥ २८ ॥

राज्यवासममितार्थसञ्चयं
बन्धुयोगमपि वासनाचयं ।
संविहाय चिरमत्र वर्त्तितुं
पश्यता स्थलमिदं समिष्यते ॥ २९ ॥

नव्यनीलदलशोभिताः क्वचित्
नारिकेलतरवः फलान्विताः ।
प्रापयन्ति किमु नो तपोवनं
गौरवं वचनवर्त्म दूरतः ? ॥ ३० ॥

दूरदर्शनसहो जटाधरो
योगिवद्घनवनोर्द्धमस्तकः ।
तालखर्ज्जुनिकरः क्वचित् क्वचित्
तिष्ठतीव परमं विलोकयन् ॥ ३१ ॥

सर्व्वएव तरवो नभस्वता
धीरमप्यनवलोकिताः क्वचित् ।
निश्चलस्तिमितदेहचेतसां
यान्ति भावमुचितं तपस्विनां ॥ ३२ ॥

क्वापि वा व्यसनसक्तकुक्कुट-
नीलकण्ठहरिणोत्सवध्वनिं ।
कौतुकादिह समस्य सन्ततं
वाति धीरमतिधीरमारुतः ॥ ३३ ॥

क्वापि पल्लवचयैरिहावृत-
श्चारुभावरुचिरो विहङ्गमः ।
श्रोत्रपेयनिनदामृतान्यलं
वर्षयन् किमपि बोधयत्यहो ! ॥ ३४ ॥

अन्तिकस्थपदवीषु बालकान्
क्रीड़तः कुतुकतः प्रतिक्षणं ।
वन्यजन्तुरपि नैकशः खरः
स्निग्धशान्तनयनं निरीक्षते ॥ ३५ ॥

धीरकम्पितपयोजरेणुभि-
र्वासिते सरसि चारुवारिणि ।
दीव्यतीह मुनिनन्दनः क्वचित्
रम्यनीरचरपक्षिभिः समं ॥ ३६ ॥

हास्यराशिरिह बालसंहतेः
पक्षिणां मधुरसाधुकूजनं ।
मीनजातचपलप्लुतिर्मुहुः
किं सरः किमपि नो करोत्यलं ? ॥ ३७ ॥

काचिदत्र जलकेन भूषति,
काचिदाशु सरलां परां क्वचित् ।
भूषयत्यविरतं, परा कलं
गायतीश्वरगुणावलिं स्वतः ॥ ३८ ॥

अन्तरा कुसुमकाननं क्वचित्
वल्कलावृततनुर्मुनेः सुता ।
शोभते कुसुमपल्लवाश्रिता
वल्लरीव सुषमामयी चिरं ॥ ३९ ॥

तीरमेतदवलम्बनं परं
दुस्तरस्य महतो भवाम्बुधेः ।
एतदेव परमं निकेतनं
दुःखदग्धजगतोऽमृतास्पदं ॥ ४० ॥

दुर्धरो विषयवासनातरुः
स्तएव सुखदुःखसन्ततिं ।
अत्र नो, न कुसुमं मनोरमं
पापकण्टकलतासु जायते ॥ ४१ ॥

दुःखमत्र न सुखे. विषमता
नो शमे, प्रणयचारुमण्डले ।
स्वार्थकान्तिरशुभा न, विद्यते
दाहकत्वमपि निःस्वतासु न ॥ ४२ ॥

स्वर्गशान्तिसुखनिर्म्मितादतो
निश्चलादहह ! निर्गतं महत् ।
ज्योतिरेव जगतोह शान्ततां
प्रत्यहं क्षिपति वाञ्छितां खलु ॥ ४३ ॥

व्याघ्रसंहतिरजैः समन्ततः
सर्पसन्ततिरसौ कलापिभिः ।
सार्द्धमेव हरिभिर्गजो भ्रमन्
भ्रातृभावमिह दर्शयत्यहो ! ॥ ४४ ॥

काचिदत्र कुसुमानि सादरं
सञ्चिनोति सरलेतरा चणात् ।
गुम्फति स्वकुतुकात् निराश्रयां
स्थापयत्यभिमते तरौ लतां । ४५ ।

बालिका कुसुमितं तरुं चिरं
सिञ्चतीह मधुराञ्च वल्लरीं ।
पश्यतः सरलतामयं मुखं
पश्यति प्रणयपूर्व्वकं मुदा ॥ ४६ ॥

आश्रमप्रतिपदे रसं किरत्-
पुष्पराशि-विशदीकृतच्छविः ।
वीरुधावलिरहो ! सृज्यत्यलं
मण्डपं परमशान्तिकारणं ॥ ४७ ॥

प्राङ्गनं नवकुटीरसम्मुखे
मार्जितम्मधुरमत्र शोभते ।
गुल्मवप्र-परिवेष्टितं सदा
पुष्पराजिरमणीयमुज्ज्वलं ॥ ४८ ॥

योगियोषिदिह पुष्पभाजनं
सञ्चिनोति बलिकर्म्मतत्परा ।
कोऽपि योगनिरतः परैः समं
योगशास्त्रमवलम्ब्य वर्त्तते ॥ ४९ ॥

पद्मदिग्धकलहंसमञ्जुल-
स्वच्छवारिभरमुज्ज्वलं सरः ।
पक्षिपङ्क्तिरसितं करोर्म्मिभिः
शोभते सुमधुरं पदे पदे ॥ ५० ॥

पद्मभातिरिह भाति नूतना,
नूतना विधु-लता-सरोद्युतिः
नूतनं विहगभृङ्गकूजनं,
नूतनैव विटपिप्रभावलिः ॥ ५१ ॥

नूतनोऽत्र नवपुष्पितस्तरुः,
नूतना किशलयावलिप्रभा ।
नूतनैव सुमनःसु कम्रता,
सर्व्वमेव नवताविभूषितं ॥ ५२ ॥

अत्र कुञ्जनिकरो मनोहर-
श्चारुवल्लिकुसुमैरलङ्कृतः ।
स्वर्णरत्नमणिभूषितं द्युति-
क्रामति प्रतिपदं निकेतनं ॥ ५३ ॥

निम्नगा कमलमालिकाकुला
तीरजातनवकुञ्जमञ्जुला ।
पश्यतां भ्रममनन्तसुचकै-
रर्द्धचन्द्रनिकरैर्निरस्यति ॥ ५४ ॥

क्षीरमुष्टलवलीलवङ्गकः
पीतशीततटिनीपयोभरः ।
पद्मरेणुरुचिरः समीरणः
क्लान्तिमत्र नयति क्षणात् क्षयं ॥ ५५ ॥

श्रेणिवद्धसहकारराजिभिः
स्वादुपक्कमधुरैः फलोत्करैः ।
केवलं न रमणीयताप्यते
रुच्यतेऽपि रसनाविडम्बिने ॥ ५६ ॥

अत्र केव सरसी निराकृता
पङ्कजेन नवशस्यमुष्टिभिः ।
क्वैव भूयुं वरसालपादपो
भङ्गकोकिलदलाङ्कुरैरहो ! ? ॥ ५७ ॥

इन्दुनिन्दिकुसुमोत्करैरहो !
मोदनोदनविनोदहेतुभिः ।
गन्धभारमिह चन्दनः किरन्
पादपोऽभ्युपगताय रोचते । ५८ ॥

नव्यभूषितमशोकपादपं
क्वापि लिङ्गितवती लतावली ।
पुष्पिता समनुरूपसङ्गम-
साधुकान्तिमुपयाति सादरं ॥ ५९ ॥

शेफालिका विदलिता रसिका प्रियङ्गुः
लोध्रप्रसूननिकरो विशदा च यूथिः ।
चूताङ्कुरो विकसितौ रुचिरं पलाशं
मग्नं करोति रसिकस्य मनोऽमृताब्धौ ॥६०॥

अर्द्धस्फुटं सरसिजं चलभृङ्गपीतं
जातिः कदम्बकुसुमं नवमल्लिका च ।
इन्दीवरं मधुरसौरभमोहितान्तः
स्यान्मालतीवकुलपुष्पमहो ! सुखाय ॥६१॥

शान्तप्रचार-हठकार-समीर-धीर-
स्पृष्टा नवा कुसुमिता व्रततिः सुदृश्या ।
भृङ्गालिकूजननुता नवमञ्जुकुञ्ज-
मध्यस्थितेह हरते नयनं न कस्य ? । ६२ ॥

रम्यासमप्रशमसुन्दरमूर्त्तिकल्पं
देवोपहासिमुनिसार्थनितान्तपूतं ।
तत्काननं सरलता-करुणा-तितिक्षा-
सत्यैकवीजमसकृद्भृशमोच्यते स्म ॥ ६३ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
तपोवनाधिगतिर्नाम
षष्ठः सर्गः ।

( आशीर्लाभः । )

प्रविवेश ततस्तपोवनं
परमप्रीतिनिदानदर्शनं ।
रमणीयतमं प्रशान्तिदं
सहसा सानुचरो युधिष्ठिरः ॥ १ ॥

प्रशमावृतमानसोऽपि सः
मधुरामोदभरेण चञ्चलः ।
अवदत् सहयात्रिकानलं
ननु तत्तदरवस्तु दर्शयन् ॥ २ ॥

शमदालिकुलस्य झङ्कृति-
र्मधुरा पक्षिचयस्य काकली ।
प्रसृतं नवकेतकीरजः
किमपि प्रक्षिपतीह तर्पणं ॥ ३ ॥

कुसुमानि समुत्सृजन्त्यहो !
क्रमशः पश्यत दक्षिणे स्वतः ।
व्रततिप्रकरेषु सादरं
सुमनोभारनता महीरुहाः ॥ ४ ॥

नवपल्लवराजिभातिभिः
स्थलमन्तं किमिवात्र राजते ।
हरिणा विहरन्ति निर्भयाः
किमिवास्मिन् सततं समन्ततः ॥ ५ ॥

इह सत्रजधूमलेखिकाः
सुर-सोपानततिं निरन्तरं ।
अनुकृत्य विद्दोत्य नीरवं
त्रिदिवे यान्ति नितान्तचञ्चलाः ॥ ६ ॥

सरसी कुमुदोत्पलोज्ज्वला
पथिकाचीणि हरत्यनारतं ।
मृदुकम्पितपल्लवोच्चयैः
ह्वयते किं चिरपुष्पिता लता ? ॥ ७ ॥

ध्रुवमेति पवित्रमुज्ज्वलं
कलिनानौचितपूर्व्वतामिदं ।
अनृतेन न पर्य्यचीयत
ननु नाश्रूयत शम्वरारिणा ॥ ८ ॥

अपरेव लतेतरेव सा
सरसी भूरुहसञ्चयोऽपरः ।
जगदत्र नवं सुसज्जितं
परमालौकिकरूपयि किमु ? ॥ ९ ॥

प्रकृतेर्मधुरे स्तरे स्तरे
लहरी सा मधुरत्वसन्ततेः ।
नवहास्यमयी निरन्तर-
मिह वाति स्वत एव दृश्यतां ॥ १० ॥

शिशवः प्रियदर्शना मुदा
विहरन्तीह किमप्यहो ! भृशं ।
मिहिरोऽपि शुचावपि स्वयं
तरुणाह्ने नमतीव दूरतः ॥ ११ ॥

सुमनःसुरभिं पदे पदे
मृदु धीरः किरतीह मारुतः ।
विहगाः कलकूजनैर्मुहुः
सरसञ्चित्तमहो ! हरत्यलं ॥ १२ ॥

बहुशः प्रथितं तपोवनं
मम जातं नयनस्य गोचरं ।
पतितं न दृशोः पथि क्वचित्
महनीयं रमणीयमीदृशं ॥ १३ ॥

सुषमा प्रकृतेर्वचःपथ-
मलमतेऽति—विलोक्यतां पुरः ।
परमः प्रशमः पदे पदे
त्रिदिवाभां परिदर्शयत्यहो ! ॥ १४ ॥

तरवो नवपल्लवैः फलैः
कुसुमैर्भान्ति सुखं स्थले स्थले ।
उपमारहितो यथा मुनि-
स्तपसो योग्यमिदं तथा स्थलं ॥ १५ ॥

भवसागरतीरमुज्ज्वलं
प्रतिमूर्त्तिस्त्रिदिवस्य भूतले ।
जगतो विषमस्य शान्तिभूः
परमन्तीर्थमिदं तपोवनं ॥ १६ ॥

इह नैव घटेत कामना
विषयस्य क्षणमप्यहो ! ध्रुवं ।
सुखदुःखचयोऽत्र कस्यचित्
हृदयं चालयितुं क्षमेत न ॥ १७ ॥

अतएव तपोवनादलं
परमज्योतिरहो ! नयात्मकं ।
ननु यत् सततं प्रकाशते
मनुजस्तत्र पतेत् पतङ्गवत् ॥ १८ ॥

सुतनुर्नवपल्लवालयो
मधुरं नृत्यति वातदोलितः ।
तटिनी खलु तस्य सम्मुखे
वहते मन्थरमाशु तर्पणी ॥ १९ ॥

मृदुवीचिचयो निरन्तरं
वकुलाश्वत्थचयप्रतिप्रभां ।
मधुरं किमपि प्रनर्त्तयन्
पुरतः सस्यहमीच्यतां सुखं ॥ २० ॥

तटिनीरसपः प्रभञ्जनो
व्रततिं पुष्पितपल्लवाश्रितां ।
सततं मधुरं प्रकम्पयन्
हृदि नः स्वःसुषमां किरत्यलं ॥ २१ ॥

पुरतो निपुणं निरीच्यतां
नवशस्यालिविराजितान्तरे ।
रुचिरोपवने गवां गणाः
तृणमत्तीह नतोन्नताननः ॥ २२ ॥

मुदिताः ! ननु दक्षिणेऽर्प्यतां
चणमक्षि प्रणयेन मेघगः ।
मिहिरातपमत्र वारयन्
तरुणोऽश्वत्थगणो विराजते ॥ २३ ॥

तपसः प्रतिभा वचःपथं
ध्रुवमत्येति, मतिः स्थिराभवत् ।
चिरशान्तिनिकेतनात्मको-
ऽयमपुण्याश्रमदर्शनेन नः ॥ २४ ॥

अधिकेन वचश्चयेन किं
निपतन्तीह नु ! यत्र दृष्टयः ।
ततएव शमो विनिःसृतोऽ-
प्यनुरक्तं विदधाति विस्मितं ॥ २५ ॥

इदमन्यदपि ब्रुवन् सुहृ-
दनुगैः सार्द्धमसौ युधिष्ठिरः ।
अचिरेण तु योगवेदिका-
मनयद्दर्शनकर्म्मतामिह ॥ २६ ॥

नवसञ्जितचारुपल्लवै-
र्नवमेघालिविभाविडम्बिना ।
तरुणेव वटेन वारिता-
तपतापां नवभा-विशोभिनीं ॥ २७ ॥

कुसुमेन फलेन पल्लव-
निकरेणोच्चयालपिणा स्वतः ।
लतयान्वितया समन्ततो
बनया साधुसमावृतामलं ॥ २८ ॥

निखिलासु सुशान्तिषु प्रियं
परमं सारमवाप्य सस्पृहं ।
चिरशान्तिमयीमिव स्वयं
विहितां तेन विरिञ्चिना स्फुटं ॥ २९ ॥

सकलः खलु तत्र नीरवः
प्रकृतेर्नीरवराज्यसञ्चयः ।
ननु नीरवधीरमारुतो
वहतीवात्र सुखेन नीरवं ॥ ३० ॥

मृदुमन्दगतिः समीरणो
रसिको नीरवमेव चुम्बति ।
व्रततिं चिरनीरवं तरो-
र्नवपत्राणि विकम्पयत्यपि ॥ ३१ ॥

मरुदत्र सुखेन नीरवं
सुमनःसौरभसारमीहते ।
मकरन्दचयश्च नीरवं
पततीवात्र सुखं समन्ततः ॥ ३२ ॥

तरवोऽपरवाः लतारवा
वसुधा नीरवतामिवाश्रिता ।
पवनोऽप्यरवः खगोऽरवः
कृतमेतैः सकलं रवोज्झितं ॥ ३३ ॥

स्थिरतारवता गभीरता
रमणीयत्वमलञ्च धीरता ।
नरवाक्पथमस्य सन्ततं
समतिक्रामति वाक्चित्रता ॥ ३४ ॥

इह साधुसुखासनोपरि
स्थितमिष्टं वपुषार्जवं जुषा ।
सुनिमीलितलोचनद्वयं
चिरमेकाकिनमुज्ज्वलप्रियं ॥ ३५ ॥

श्लथपाणिमुरूपरि स्वतो
धवलश्मश्रुभिरावृतोरसं ।
शिरसि प्रसृतं जटोच्चयै-
रलमुन्नीतललाटपट्टकं ॥ ३६ ॥

जितभास्करतेजसा चिर-
सुतपोवर्द्धितवर्चसा वनं ।
सकलं परिपूरितं स्वयं
कृतवन्तं परिशान्तमुज्ज्वलं ॥ ३७ ॥

करुणामृतसत्यसाधुता-
समुपादानविनिर्म्मितं किम् ?
प्रतिभाप्रभया गभीरता-
मितदीप्ते व सदाभ्युपासितं ॥ ३८ ॥

चिरनिश्चलपद्ममालया
स्थिरदृष्ट्या परमर्षिमुज्ज्वलं ।
सुनिपीय जड़ाइव स्वत-
श्चिरमासन् ननु पाण्डुनन्दनाः ॥ ३९ ॥

स्थिरनिश्चलदीर्घचक्षुषा
चिरमालोकयतः स्वतो हठात् ।
तपसस्तनयस्य विस्फुरद्-
वदनाद्वाक्यततिर्विनिःसृता ॥ ४० ॥

वसुधा स्थिरतां, शिलोच्चयो
गुरुतां, वारिनिधिर्गभीरतां ।
प्रखरप्रतिभां रविः, शशी
प्रशमं किं लवतोऽह्वरस्वितः ? ॥ ४१ ॥

प्रशमोऽपि नितान्तमूर्त्तिमा-
नयमत्युज्ज्वलवर्ष्मसैकदा !
प्रतिहृत्य विलोकिचक्षुषी
जनयत्युल्बनभीशमौ स्वतः ॥ ४२ ॥

भुवनार्च्चितपादपङ्कज-
परमर्षेरपि नामचिन्तनं ।
बहुजन्मज-पापसञ्चय-
मपि हर्त्तुं क्षमतेऽपरं किमु ! ॥ ४३ ॥

करुणास्य न भाषयोच्यते,
हृदयागोचरतां गता क्षमा ।
सततानुगतेव तुष्टता,
चिरशान्तिः करएव वर्त्तते ॥ ४४ ॥

प्रमदो विषमापि कामना
व्यसनं क्रोधचयस्तमःकुलं ।
परमर्षिमहाप्रभावतो
लयमापुः सुचिराय मूलतः ॥ ४५ ॥

अलमस्य चिरप्रसन्नतां
विमलामार्जवराजिमप्यहो !
मधुरां तपसोऽप्यनुष्ठिति-
मसकृद्दीक्ष्य भवामि भाग्यवान् ॥ ४६ ॥

अथ विश्वजनाभिवन्दितः
परमर्षिर्नयनेऽपमीलयन् ।
सदयामृतवीक्षणैरल-
मभवत्तानभिषिंचयन्निव ॥ ४७ ॥

सहसा मुनिपादपङ्कजे
दधतस्तान् शिरसि प्रभक्तितः ।
कुशलं परिपृच्छ्य सादर-
मुपवेष्टुं समुवाच सस्मितं ॥ ४८ ॥

अथ धर्म्मसुतः समुन्नत-
हृदयो बद्धकराम्बुजोऽब्रवीत् ।
भगवन् ! भवतः प्रसादतः
कुशली सानुचरोऽस्मि सग्रजः ॥ ४९ ॥

अनुजैः प्रियया च किन्त्वहं
प्रभुताश्रामपहाय दुर्भगः।
भवदिङ्गितवाक्यजाततः
सुचिरप्रस्थितिमाश्रयं स्वयं। ५० ॥

भगवन्ननुगृह्य रक्षक!
सफलं नः क्रियतामभीप्सितं।
करएव भवादृशामहो!
सततं तिष्ठति नः शुभाशुभं॥ ५१ ॥

अथ सस्मितमुत्सुकान्तरः
स्मितशोभाजितचन्द्रविभ्रमः।
हृदयं परिवुध्य भूपतेः
समुवाचाशु पराशरात्मजः॥ ५२ ॥

मतिमन्नतिभाग्यवान् भवान्
तव तुल्यो नु! किमस्ति कश्चन?
अनुकृत्य भवन्तमादरात्
ननु तीर्य्यत भवाम्बुधिर्महान्॥ ५३ ।

तरुमूल इहास्ति हर्म्यधीः
रमणीप्रीतिरसौ लताततौ।
हरिणेषु नितान्तसंस्तुत-
सहजस्नेहततिस्तव स्वतः॥ ५४ ॥

तरुवल्कलएव सन्ततं
मृदुवस्त्राभिरुचिः समाप्यते ।
जटया घनचारुकुन्तल-
रचनाप्रीतिरिहैव गच्छते ॥ ५५ ॥

लघुमूलफलानि दस्यवे
व्यसनितं जपमालिकास्वलं ।
जनपालनयोग्यता समित्-
कुश-पुष्पेषु चिरं नियोक्ष्यते ॥ ५६ ॥

विजयेत नु ! धर्म्मभाषणं
स्थिरमूलन्त्वपि नर्म्मभाषणं ।
चरमोपशमे चिरस्थिर-
समरस्वादसुखं प्रपद्यते ॥ ५७ ॥

भवतोऽस्ति मुहुः समुद्भवे
विजिगीषा, स्थिरकोषवासना ।
तपसि, व्रततौ महीरुहे
तनयस्नेहभरो विराजते ॥ ५८ ॥

किमधिकैर्वचनैः परमोत्सवा-
दचिरमेव नितान्तमभीप्सितं ।
स्थलमलं भवरागविरागिणां
प्रकुरुतां चिरवासनिकेतनं ॥ ५९ ॥

हुत्वा समाधिषमलं शिरसा गृहीत्वा
विश्वातिशायिविभवस्य पदाब्जरेणु ।
व्यासस्य शान्तिनिलयाय हिमाचलाय
धर्म्मात्मजः सपदि सानुचरः प्रतस्थे ॥ ६० ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
आशीर्लाभो नाम
सप्तमः सर्गः ।



( वसन्तः )

अथ मुदा रसिको रसदैवतो
मधुरवेशविशेषसुशोभितः ।
जनयितुं जगतां कुतुकं महत्
समुदितो मुदितोऽत्र मधुः स्वयं ॥ १ ॥

मृदुमृदुस्मितभातिमलं किरन्
सरतिको मदनो रसमूर्त्तिकः ।
अनुदितोऽपि न किं तमनुव्रजेद्-
रसमये समये सुहृदं प्रियं ? ॥ २ ॥

प्रकृतिराजिविभानिधिमीक्षितुं
हिममवारितमेतुमथापि वा ।
प्रणयिनं कुतुकेन हिमालयं
दिनकरो न करोति किमु स्वतः ? ॥ ३ ॥

दिनकरव्यसनादिव दुःखितो
मलयशैल इहाशु जहाति तं ।
अहह ! निश्वसनाभसमीरणं
न सहते सह तेन शमं क्वचित् ॥ ४ ॥

মলয়নিঃসৃতনিশ্বসনানিল-
ভয়বশাদিব বা নবকৌতুকাৎ।
নবনবং পরিবেশমলং শ্রয়ন্
দিনমণির্ন মণির্ব গতঃ কিমু ? ॥ ৫ ॥

যমদিশঃ শ্রয়ণাদপি দুর্ব্বলঃ
কিমু গতো ন সুখং স দৃঢ়োজ্জ্বলঃ ?
ধনপতিশ্রিতসাধুদিশং ব্রজন্
দিনকরো ন করোদ্ধততাং কিমেত্ ?॥ ৬ ॥

দিনপতির্ব্যসনং বসনং বলা-
দ্ধিমরিপুঃ পরিধাপয়িতুং কিমু।
হিমগিরিং ব্রজতীহ ? ন কো বলী
প্রজবনং জবনং শ্রয়তে রিপৌ ? ॥ ৭ ॥

নবনবৈঃ কুসুমৈর্নবজীবিতে
নবনবে বিপিনেঽত্র কলং রুবন্।
নবনবো বিহগো লভতে ন কিং
নবলতাবলতাণ্ডবকৌতুকং ? ॥ ৮ ॥

সুরসনীরধরঃ সরসীবরঃ
কলমরালনিতান্তসমর্চ্চিতঃ।
চপলষট্পদকামধরাহ্নিতঃ
কমলকামলকান্তিবিরাজিলঃ ॥ ৯ ॥

निविड़सुन्दरपत्रसुशोभितैः
घननिविष्टमहीरुहसञ्चयैः ।
जलदभातिमहो ! मनुते क्वचि-
न्मृगमनो गमनोत्सुकतां गतं ॥ १० ॥

विदलितैः कुसुमैर्हृतषट्पद-
मिह न किं विपिनं कुतुकाश्रितं ।
श्रयति चारु विहङ्गनिनादितं
पवनपावनपादपसञ्चयं ? ॥ ११ ॥

इह सुखे क्व न कृत्रिमकानने
युवजनं युवतीभिरवञ्चितं ।
मधुपराजियुताह्वयति स्वतः
कुसुमिता सुमिता नववल्लरी ? ॥ १२ ॥

अरुणदृक् सहकारतरौ वसन्
द्विजवरः खरकोपवशादिव ।
अशपदेव कुहूध्वनिभिर्मुहुः
अलभतां लभतां मदनानले ॥ १३ ॥

भ्रमरझङ्कृतिभिः पिकगीतिभिः
सुमनसां ज्वलनैर्मलयानिलैः ।
विरहिणः सततं गरलैरिव
किमु मुहुर्मुमुहुर्न निरन्तरं ? ॥ १४ ॥

इह विलासरसाम्बुधिमज्जितै-
र्दयितया सहितैर्दयितैश्चिरं ।
रसवती धरणी न किमिष्यते
नवनवा वनवातनिषेविता ? ॥ १५ ॥

मधुपकोकिलनादनिनादिते
मलयमारुतजातनिषेविते ।
प्रियतमारहितो भ्रमति क्व कः
स्मरवलो रवलोलयुवा मुहुः ? ॥ १६ ॥

मलयसम्भवधीरसमीरणैः
प्रियतमैरिव चुम्बितदेहया ।
क्व सरसे विपिने नवया तया
चलतया लतया न सुशुभ्यते ? ॥ १७ ॥

रसपयोनिधिमज्जनचातुरी-
कुशलिनो रसिका इह नेच्छितुं ।
अभिलषन्ति किमु स्मरमोहिताः
भ्रमरलौ मदलौल्यमहो ! चणं ? ॥ १८ ॥

सनिनदैः सुमनोमधुलोलुपै-
र्युवतिभिर्युवकैश्च विजृम्भितैः ।
पिकवधूकलगीतिभिराकुला
नवसुधा वसुधात्र सुशोभते ॥ १९ ॥

कमलचारुपरागविराजितं
मृदुतरङ्गविकम्पितचन्द्रकं।
तटगतं युवकं कुरुते चलं
नवसरोऽवसरोदितविभ्रमं ॥ २० ॥

इह गभीरसरस्यपरीवले
विहगकूजनसार्थनिनादिते।
पथिकमारुतचुम्बनकम्पिते
सकमलं कमलं ननु दीप्यते ॥ २१ ॥

सुखरसोरसि चारुविकम्पिते
धृतसहस्रसुधाकरमण्डला।
सनिनदभ्रमरी-परिराधिता
न सरसी सरसी किम् वर्त्तते ? ॥ २२ ॥

क्वचिदिहोन्नतशाखिसमाश्रिता
कुसुमराजिविराजितविग्रहा।
युवमनो व्रतती हरते न किं
समधुपा मधुपानसुखस्थली ? ॥ २३ ॥

नवनवोज्ज्वलवेशविभूषिते
निखिलजीविमनोहरणक्षमे।
सुमधुरे सरसे जगतीतले
सरुचिरे रुचिरे न च काः श्रियः ?॥२४॥

कुसुमभूषणभूषितविग्रहा
किसलयस्मितसाधुसुशोभिता ।
क्व रमते व्रततिर्युवतिर्न वा
युवहरीव हरीश्वरवन्दिता ? ॥ २५ ॥

सुमधुरैः सरसः सुषमाभरैः
पिकवधूकलपञ्चमगीतिभिः ।
अलिविलासविजृम्भितधावनै-
र्जनमनो नमनोन्नमनोत्सुकं ॥ २६ ॥

निपतितैः सहकाररजोभरै-
र्विलसिते विपिने सुषमास्पदे ।
किमु सदा भ्रमतीह न कोकिला
सततगा ततगानसमुत्सुका ? ॥ २७ ॥

कुमुदनायकएव नभःसरः-
कमलतामुपगच्छति सन्ततं ।
समुदिते रसवारिणि मज्जते
प्रमदया मदयानविलासया ॥ २८ ॥

कुसुमसायकसायकदग्धया
हृदयहीनतयेव कयाचन ।
अमितदृश्यपदार्थजुषाप्यल-
मुपरितः परितः किमपीक्ष्यते ॥ २९ ॥

पुरुषकोकिलकोपनलोहित-
नयनतः पतितामनुरागितां ।
अधिगतेव सुखेन विलासिनी
रसहसा सहसा प्रियमीक्षते ॥ ३० ॥

विलसनव्यसनाश्रितचेतसा
प्रतिपदं युवकेन समं न का ।
इह नु ! दीव्यति भूषितमण्डपे
कुसुमितैः सुमितैर्व्रततीकुलैः ? ॥ ३१ ॥

मधुरसौरभविभ्रमविमोहिनी
रसवती सहकारसुमञ्जरी ।
इह न कस्य मनोहरणे क्षमा
मुकुलिताकुलितालिपिकावली ? ॥ ३२ ॥

इह मनोभवमर्द्दितचेतसां
सुखभुवां परिरम्भणसन्ततिः ।
स्फुटनवीनपयोधरयोषिता-
मतनुता तनुतापविशोषिणी ॥ ३३ ॥

अलिपिकावलिगीतिसमाकुले
मधुरया लतयातिमनोहरे ।
कुसुमपल्लवशोभिनि कानने
स्मरमयं रमयन्ति न काः स्त्रियः ?॥३४॥

कुसुमचाप-नितान्तसमर्द्दितै-
र्युवतिभिर्युवकैश्च समन्ततः ।
इह मुदा सततं भ्रमणाच्छलात्
परिभवोऽरिभवोऽपि न गण्यते ॥ ३५ ॥

मधुमदाद् रमणीषु नवासु किं
मधु नवं घटते ? कथमन्यथा ।
युवततिर्मदमेति पिबन्नहो !
भ्रमभितामभितालिवृतां दृशा ? ॥ ३६ ॥

किसलयैः सरसीह वनस्थली
विहगभृङ्गपिकावलिसंस्तुता ।
पथिकजातमनोहरणेश्वरी
यमवतामवतामपि मानिता ॥ ३७ ॥

क्वचिदहो ! सरसीतटमन्दिरे
मलयमारुतसाधुनिषेविते ।
सुनिभृतं रसिको मृदु चुम्बति
समवलामवलामतितर्पणीं ॥ ३८ ॥

कमलकुङ्कुमरेणुविभूषितं
नवसरः क्वचिदत्र विराजते ।
दिवसशेषविशिष्टनभो यथा
श्रमहरं महरञ्जितमुज्ज्वलं ॥ ३९ ॥

मधुरपङ्कजसौरभचुम्बित-
मिह पिकावलिगीतिरसावयं ।
ननु युवा युवतिश्च न किं भृश-
मुपवनं पवनञ्च निषेवते ? ॥ ४० ॥

प्रियतमस्मरणव्यसनाकुला
क्वचन कापि हताश्रयदुःखिता ।
त्यजति धैर्य्यमभीत्य मनोहरं
द्रुमहितं महितं सरसीतटं । ४१ ॥

विरहिणी-नयनात् सलिलान्यलं
वत ! निपातयतीह रजोभरा ।
मलयदिग्भववातसमीरिता
नवलता वलताण्डवकोविदः ॥ ४२ ॥

अतनुना तनुतां गमिता क्वचि-
दिह सुधांशुमुखी ननु काचन ।
स्मरशरं कुसुमादपि निःसृतं
ध्वनिभृतं निभृतं किमु मन्यते ? ॥ ४३ ॥

अतनुलोहितनेत्रमुखौष्ठया
महिलया सबलं भृशनिर्जितात् ।
विटपकादिह निःसरति त्वरा-
मवितथा वितथापि सरस्वती । ४४ ॥

समभिमानरजोऽर्हितहृत्कृतया
क्वचन कापि न पश्यति सत्वरं ।
अयुगसायकदंशनदुर्व्वलं
प्रियतमा यतमानमपि प्रियं ॥ ४५ ॥

युवतयो रसिकाः किमपि स्थलं
मधुरभावविलाससुशोभिताः ।
निविड़पीननितम्बकुचालसाः
अगमयं गमयन्ति तड़िल्लतां ॥ ४६ ॥

अहह ! पञ्चशरानलतेजसि
शलभतामधिगम्य तृषा पपौ ।
सरसपद्मदलास्तरणा द्युतौ-
र्दिवि तता वितताच्चिसमाश्रिता ॥ ४७ ॥

पथिकजातनितान्तसमाहृताः
सुरभिणा सरसा बहुभूमयः ।
विदलितामलपुष्परजोभरै-
र्विदधिरे दधिरेणुमया इव ॥ ४८ ॥

कमल-कुन्द-पलाश-विभूषिते
इह युवा युवतिश्च घटेत किं ?
दहति यामपि नैव यमर्हितं
शुभरजोभरजो मदनानलः ? ॥ ४९ ॥

सकुसुमे पिकभृङ्गनिनादिते
सदयितो नवकाननमण्डपे ।
अनुबभूव सुखं दयितो दिव-
स्तरलतारलतावलिवेष्टिते ॥ ५० ॥

ध्रुवमशोकमशेषमलं नव-
मरुणभातिनिपीतवनप्रभं ।
विदलितं वधुया मदनानल-
मदयिता दयिता ननु मन्यते ॥ ५१ ॥

श्रवणपेयविहङ्गमकूजनैः
कुसुमितव्रततिप्रभयापि च ।
सनिनदभ्रमरैर्विपिनस्थली
नवनवा वनवासिभिरादृता ॥ ५२ ॥

इह षड़ङ्घ्रिगणो मधुमादितः
कुसुमतः कुसुमान्तरमिच्छति ।
रसवती मृदु गायति कोकिला
प्रियहिताय हि तादृगसौ कलं ॥ ५३ ॥

श्रुतिनिपीतपिकस्तुतिगीतिभि-
र्नवनवातिबलः परिबोधितः ।
कुसुमचाप इहोदितविभ्रमो
रसिकवासिकतासु निमज्जति ॥ ५४ ॥

अहह ! चारुरसालनवाङ्कुर-
रसभरो मदनस्य शरोपमः ।
विरहिणः पथिकस्य भिनत्त्यलं
चिरचितं रचितं हृदयं मुहुः ॥ ५५ ॥

मधुरया रमणीयतया न का
दृढमलक्रियते विपिनस्थली ?
मदनबाणहता युवतिर्न का ?
कुसुमिता सुमिता व्रततिर्न का ? ॥ ५६ ॥

प्रतिपदं नवपल्लवपुलुन-
मलिनिपीतसरोजमपि क्षणां ।
स्मरहुताशनवत् खलु राजते
नयवतेऽयवते पथिकाय तत् ॥ ५७ ॥

विहग-भृङ्ग-पतङ्गनिनादितं
किमु सरः शतपत्रभराकुलं ।
मदनसायकवन्न छिनत्त्यलं
असहितं महितं पथिकान् सतः ? ॥ ५८ ॥

ननु सरः किमिहास्ति सरोरुह-
विरहितं ? किमिहास्ति सरोरुहं ।
विरहितं भ्रमरैः ? भ्रमराश्च के
समदना मदनापकृतिक्षमाः ? ॥ ५९ ॥

तरुचयः कठिनोऽपि नवाङ्कुरैः
किशलयैः कुसुमैश्च, पिकावलिः ।
मलिनताभरभागपि गीतिभिः
ससुमनःसुमनःसमये प्रियः ॥ ६० ॥

क्वचिदहो ! मलयागतमारुत-
मृदुविकम्पितचूतमहीरुहः ।
क्षिपति नो किमु पुष्पतिलाञ्जलिं
प्रियतमायतमान-विषादिने ? ॥ ६१ ॥

इह नु ! पञ्चशरः स्मरवाचको
न भजते ननु यौगिकतामयं ।
इतरथा निखिलं कुसुमं कथं
जनमनोनमनोन्नतिसाधनं ? ॥ ६२ ॥

इह विराजतएव वने वने
स्मरशरप्रभकिंशुकमण्डलं ।
विरहिणां किमु नैव पलाशना-
दभिमताभिमतास्तु पलाशता ? ॥ ६३ ॥

कुसुमराजिविराजितसुन्दरो
मणिविभूषितवारणकुम्भवत् ।
क्व नु ! सुशोभत एव सुयोषितां
स्तनचये न चयोऽपि महीरुहां ?॥६४॥

किमिह चारुविभा नवमल्लिका
न हृदयं हरतीव पदे पदे ?
अलमशोककुलं ज्वलति स्वतः
सुरमणी रमणीयमनुत्तमं ॥ ६५ ॥

इह कुचे वदने करपङ्कजे
मृदुतमे युवतेर्जलबिन्दवः ।
स्मरतरोर्मधुराङ्कुरवत् सदा
समुदिता मुदिताखिलचेतसि ॥ ६६ ॥

क्वचिदनल्पसरोरुहरेणवो
मलयचुम्बिसमीरसमीरिताः ।
स्मरशरानलनिःसृतबिन्दुवद्-
रुरुचिरे रुचिरेऽत्र सुखास्पदे ॥ ६७ ॥

रतिपतिर्युवतेर्वचने मुखे
दृशि कपालकपोलतलेऽपि च ।
विलसनं किरतीह निरन्तरं
सुरगणैरगणैरपि काङ्क्षितं ॥ ६८ ॥

कुरवकामितसुन्दरमञ्जरी
प्रतिपदं विपिनस्य सुगौरवं ।
जनयितुं किमु न प्रभवत्यपि
नवकुलं वकुलं मधुपाकुलं ? ॥ ६९ ॥

नवरसालसमाश्रितमाधवीं
कुसुमितां सरसाञ्च विलोक्य का ।
प्रियतमं स्मरतीह न भावुक-
मदयिता दयिताधिगमार्थिनी ? ॥ ७० ॥

युवतिहास्यहरं नवमम्बुजं
विदलितं किमु कुन्दमनाविलं ।
न विरही सुविभेति वृथा मुहुः
सततमाननमाशु भृशं पिबन् ? ॥ ७१ ॥

मधुरकुसुममालालालिताभिर्लताभि-
र्नवनवसुषमाभिप्रोच्चितं साधुवेशं ।
विलसनपरंसार्थप्रीतिदं वीक्ष्य तेऽलं
विपुलनवसुखाब्धःस्नातवत् शान्तिमापुः ।७२।

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
वसन्तो नाम
अष्टमः सर्गः ।



( हिमालयविलोकनं )

अथ कृतिर्मधुरा जगदीशितुः
निविड़नूतननीरधरप्रभः ।
प्रकृतिसाधुनिवाससुखस्थली
नयनगोचरतां गतवान् गिरिः ॥ १ ॥

अचलशृङ्गमलं रुचिरं गुरुः
परमनीलमयं ददृशे मुहुः ।
मधुरनूतनचारुपयोधरे
इतरनूतनवारिधरो यथा ॥ २ ॥

प्रकृतिनित्यविलासविचित्रता-
मयमदः शिखरं किल राजते ।
क्वचन नीलसुवर्णहरिण्मयं
क्वचन रक्तपयोजविभामयं ॥ ३ ॥

मधुरनीलनवीनमहीरुहैः
क्वचिदयं तिमिराढ्य इवावभौ ।
क्वचिदयं नवलोहितपादपै-
ररुणकान्तिविनिर्म्मितवत् स्वतः ॥ ४ ॥

निविड़काननसंहतयः क्रमाद्-
भूशममुष्य वदन्ति गभीरतां ।
नवनवैस्तरुभिर्व्रततीचयै-
र्नियतमुच्यतएव विचित्रता ॥ ५ ॥

अलममुष्य नितान्तगभीरतां
कृतिमनोऽपि न वेत्ति कथञ्चन ।
अननुभूत्तपदार्थविलोकन-
चमवतो नयनस्य तु का कथा ? ॥ ६ ॥

मृदुविलोकनमप्यतिभैरवं
क्वचिदलं मधुरत्वमयं क्वचित् ।
मधुरतामयभैरवतामयं
क्वचिदहो ! वचनस्य न गोचरं ॥ ७ ॥

तरुणपादपकण्ठ-विदोलिता
कुसुमिता व्रततिः पवनेरिता ।
सहृदयस्य विलोकयतश्चिरं ।
जनयति प्रणयं कमपि स्फुटं ॥ ८ ॥

विषमशेखरके नवपादप-
व्रततिभिः समलङ्कृतसुन्दरे ।
परिसरोणकुटीर-विचित्रता
त्रिदिवदुर्लभरम्यतयाञ्चिता ॥ ९ ॥

क्वचिदनाहतनिर्झरिणीतति-
र्हृदयतो निपतन्ति निरन्तरं ।
स्थिरतडित्सुषमाभिनयक्षम-
विमलचारुपयांसि अलम्बनं ॥ १० ॥

क्वचिदतीव नवीनविचित्रता-
भरमयो महनीयसमुज्ज्वलः ।
सलिलवेगभरः शिखराद्भृश-
मवरुरोह समुज्ज्वलताङ्गना ॥ ११ ॥

मधुरनिर्झरनिःसृतजीवन-
ततिरहो ! निपतन्त्यतिवेगतः ।
दिनकरच्युतरश्मिसमाश्रिता
किमपि दर्शनमावहते स्फुटं ॥ १२ ॥

विटपिनौ क्वचिदत्र परस्परं
मधुरमीदृशमाश्वभिलिङ्गतः ।
यदयने पथिकश्चिरमीक्षणा-
दपि पृथक् लभते न विवेदितुं ॥ १३ ॥

प्रकृतिवेशरसावशमानसाः
प्रतिदिनं विविदन्ति सुदूरतः ।
असमनीलपयोधितटस्थितः
तदतिसुन्दरवीचिरितीक्ष्यते ॥ १४ ॥

प्रियतमस्मरणागतकल्पना-
श्रितवधूवदनं सरसं यथा ।
विदलितस्मितशोभितलज्जया
वनमहो ! क्वचिदेष विराजते ॥ १५ ॥

क्वचिदिहोन्नतकाननराजितः
कुसुमराशिविभासु विनिर्गता ।
वनसुरी-स्मितताः चिरसञ्चिता
न लभते किमु शान्तिविधायिनी ? ॥ १६ ॥

उभयतः क्वचिदत्र चिरस्थिर-
स्तरुचयः कुसुमावलिशोभया ।
रुचिरया कुरुते पदवीं स्थिरां
हृदयधैर्य्यहरीं सुषमामयीं ॥ १७ ॥

विशद-लोहित-नील-हरिण्मयैः
न कुसुमैरुपलैरपि किञ्चन ।
किमु विबोधयतीह मुहुर्मुहुः
निखिलविश्वविधेर्वरशिल्पितां ? ॥ १८ ॥

विरतिहीननवीनवनस्थले
विटपिनो निवसन्ति न तादृशाः ।
मधुरपुष्पभरैर्वनगौरवं
जनयितुं चिरमेव न ये क्षमाः ॥ १९ ॥

नवलते कुसुमस्फुटयौवने
किसलयैः सरसैर्मृदुवाङ्गभिः।
किमु विधृत्य सुखेन परस्परं
न वहतश्चिरसख्यमिह क्वचित्? ॥ २० ॥

इह नदी कलपञ्चमनादिनी,
विटपिनः फलपल्लवभूषिताः।
सुखकरी व्रततिः स्थिरपुष्पिता,
वनधरा सततं सुषमाभरा ॥ २१ ॥

भ्रमरकैर्निनदैः प्रतिवोधितं
पथिकजातमिदं विनिवेदयन्।
क्वचिदलं प्रणयी धरणीतले
निपततीह मुहुः सलिलच्छलः ॥ २२ ॥

सबलमाहरतीव नवागत-
जनमनः सततं सुखदृश्यता :
उपरितः परितश्च समन्ततः।
प्रकृतिचित्रविचित्ररसाश्रिता ॥ २३ ॥

इह न दृश्यहतिः क्व च दृश्यते,
भृशमशेषमनोहरदृश्यता।
प्रतिपदं विषमार्त्तिमतामपि
जनयति क्षणमुत्सवसञ्चयं ॥ २४ ॥

इह तरुविटपं कुसुमं स्थलं
नवमिव प्रतिभाति किमुक्तिभिः ?
निखिलकान्तिभरैर्जगदीप्सिता
इदमहो ! मनसेव विनिर्म्मितं ॥ २५ ॥

इह रसालमहीरुहसन्ततिः
किशलयैर्भ्रमरमञ्जुलमञ्जरैः ।
रुचिरभातिनितान्तविभूषिता
पिकमनो हरतीव निरन्तरं ॥ २६ ॥

क्वचिदनल्परसालविभातति-
श्चिरमलं परिराजति तर्पणी ।
इह विलुञ्चमहातरुराजितो
हरति पुष्परजो मृदुमारुतः ॥ २७ ॥

दलित-लोहित-पीत-तृणावली
मधुर-कोमल-कान्त-मनोहरी ।
रचयति प्रथितं शयनं सुखं
इह न किं प्रकृतेर्म्महनीयभं ? ॥ २८ ॥

क्वचिदिह व्रततौ कुसुमान्वितं
किशलयं रुचिरं परिशोभते ।
प्रकृतिचित्र-सपुष्पकचावली-
द्युतिततेर्गतवत् प्रतिपद्यतां ॥ २९ ॥

কুসুমরাজিবিরাজিতবল্লরী-
রিহ বিধূয় বিহঙ্গনিনাদিতঃ।
দ্রুমচয়ঃ প্রকৃতের্নবকুঞ্জবৎ
প্রতিপদং সততং পরিশোভতে ॥ ৩০ ॥

কুসুমপল্লবশোভিতসুন্দরঃ
সলিলবেগচয়ো মধুরস্বনং।
ক্বচিদিহোপলরাশি-সুখাধ্বনা
প্রবহতি প্রচুরং কলহংসবৎ ॥ ৩১ ॥

তরুশিরঃ ক্বচিদত্র সুখাস্পদং
বিশদলোহিতভং কুসুমং দধৎ।
স্মিতমিবৌষ্ঠমিব প্রকৃতেশ্চিরং
নিবিড়পত্রযুতং ননু রাজতে ॥ ৩২।

অভিনবা ইহ রাজতরেণবঃ
ক্বচিদলং প্রতিভান্তি মনোহরাঃ।
নিপতিতা ভৃশমত্র মরীচয়ো
দিনপতের্দধতি স্ববিচিত্রতাং ॥ ৩৩ ॥

তদভিতস্তরবো নববীরুধো
বিজড়িতাঃ কুসুমৈর্নবকান্তিভিঃ।
ধবল-লোহিত-পীত-বিমিশ্রিতাঃ
ন বিকিরন্তি মুহুঃ সুষমাঃ কিমু ? ৩৪

निपतिता दृषदो दृषदन्तरे
सलिलवेगततिर्ब्बहुखण्डिता।
कुलवधूरिव चारुविलासिनी
मृदु मृदु क्वचिदत्र वहत्यहो! ॥ ३५ ॥

कुसुमराशिविभासितविग्रहः
इह कदम्बचयो नितरां मुहुः।
भगवतोऽप्यनुरागवशादिव
छुपितरोमचयः खलु वर्त्तते ॥ ३६ ॥

मधुरनर्त्तनचारु परायणो
विशदपुच्छशिखण्डिकदम्बकः।
प्रतिपदं परिशोभयति च्चणा-
न्नवकदम्बतरून् सुमनोवृतान् ॥ ३७ ॥

इह सदैव धरन्ति गभीरतां
निबिड़तां सुषमाञ्च पवित्रतां।
प्रकृतिचित्रितरम्यविभूतयः
विषमसल्भृतो वनराजयः ॥ ३८ ॥

रुचिर-तुङ्ग-तरङ्गविभूषिता
कलमरालविहङ्गनिनादिता।
सरसपूर्णपवित्रपयोभरा
शतमुखं तटिनी वहति स्फुटं ॥ ३९ ॥

जितसुधारससारफलान्यलं
ददति चारु सदा धरणीरुहाः ।
अभिनवस्वदनं सलिलं नदाः
खरतरं वितरन्ति निरन्तरं ॥ ४० ॥

तटगतादिह पादपतश्चिरं
निपतितानि फलानि सहस्रशः ।
मुखरयन्ति सदा प्रमदा नदीः
सजवना वनभागविडम्बिनीः ॥ ४१ ॥

इह निदाघ-निपीतरसोत्करैः
कुसुमितैस्तरुभिः कुसुमैश्चिरं ।
सलिलधौततलैः तटिनी सती
भृशभृशं ननु का न समर्च्यते ? ॥ ४२ ॥

प्रतितराविह कुक्कुटराजयः
स्थिरतरं निवसन्ति रुवन्ति च ।
भृशनिनादपरिश्रमतश्चिरं
स्थितिमिताः खलु यान्ति सुमीलितां ॥ ४३ ॥

क्वचिदयं तरुपत्रफलोत्करै-
रविरतैरधिगच्छति नीलतां ।
मुखरतां क्वचिदेव नदीस्वनैः
क्वचन भीषणविस्तृतिरुन्नतां ॥ ४४ ॥

प्रमदसत्त्वकुलप्रखरस्वन-
ततिनितान्तनिपीत-श्रमक्रमः ।
क्वचिदयं स्मरणोत्सुकचेतसा-
मपि मनःसु भयं जनयत्यलं ॥ ४५ ॥

विरहितो मधुरैरपि कूजनैः
क्वचिदसौ क्वचिदेव समन्ततः ।
प्रचुरचारुविचारविभीषण-
प्रखरसत्त्वनिनादभयङ्करः ॥ ४६ ॥

क्वचन चारुविहारवनानिल-
मृदुविचुम्बितवारिभराण्यहो !
सकमलानि सरांसि निरन्तर-
मतिथये ददतीह कुतूहलं ॥ ४७ ॥

क इह नैव ददाति तरुः स्वतः
किसलयं कुसुमं फलमप्यलं ?
ददति कानि सदातिथये सुखं
न कुसुमानि मधूनि च सादरं ? ॥ ४८ ॥

क्वचिदयं मदमत्तशिखण्डिना-
ममलकण्ठविभाभिरिवोच्चितः ।
क्वचन नीलिमपत्रफलोच्चय-
विटपिजातविभाततिपूजितः ॥ ४९ ॥

रुरुचयो मदसाध्वसवञ्चितः
क्वचन चारुरुविर्गतिभङ्गिभिः ।
किरति, रम्यकलापिकुलं क्वचि-
दतिथये रुचिभिः परिरोचते ॥ ५० ॥

मदविलासिविहङ्गमसन्तति-
विहरणभ्रमणक्रमणाहिता ।
द्युतिमती रुचिरा नववल्लरी
नमति चापि समुन्नमति क्षणात् ॥५१ ॥

क्वचिदभग्नतटस्थितवेतस-
व्रततिरत्र कियद्वपुषा मुहुः ।
निपतिता तटिनीसलिलोदरे
ननु निमज्जति गच्छति कम्पते ॥५२ ॥

क्वचन निर्झरिणीसलिलोपरि
प्रवलमच्छकुलं पतितं भवत् ।
प्रचुर-तार-भयङ्कर-निस्वने-
रिह विवर्द्धयति क्षणमत्रयं ॥ ५३ ॥

सततमत्र सकेककलापिनो
मृगगणो मदवर्द्धितचंक्रमः ।
मधुरमञ्जुलगुञ्जितकाननं
निविड़पादपचारु नदीतटं ॥ ५४ ॥

नवलताफलपर्णमहीरुह-
रुचिरभातिनिपीतनिजप्रभः ।
क्वचिदयं निकटादपि सन्ततं
नवपयोधरवद्भ्रममीच्यते ॥ ५५ ॥

क्वचिदहो ! तटिनीतटकानने
गजपतिः सममत्र करेणुभिः ।
भ्रमणचुम्बनलिङ्गनदर्शनै-
र्नवनवं खलु दीव्यति सादरं ॥ ५६ ॥

नारिकेल-नवताम्बुलीलताः
केतकी-मृदुलवङ्गसञ्चयः ।
सम्भवन्ति शतशः पदे पदे
मञ्जुकुञ्जनवमण्डपा इव ॥ ५७ ॥

संशोभितो नवनवैः सरसैः पदार्थैः
साधुप्रमोदनिचयात्मक एषशैलः ।
दूरादपि प्रणयवन्तमनन्तभावं
नूनं करोति मनुजं सुविलोकयन्तं ॥ ५८ ॥

इति श्रीअन्नदाचरण तर्कचूडामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
हिमालयविलोकनं नाम
नवमः सर्गः ।

( हिमालयप्रवेशः । )

अथ विवेश स सानुचरोऽन्तरं
नृपतिरस्य सुसज्जित-वस्तुभिः ।
हृत इवाशु विधृत्य करद्वयं
रुचिरविस्मयपीतमनःक्रमः ॥ १ ॥

विशति यावदनन्तरमन्तरं
नवरसाहृतचंक्रमणाश्रमः ।
किमिव तावदमिश्रितविस्मये-
रननुभूतमधिक्रियते क्षणात् ॥ २ ॥

कथमिवाशु पदं न लभेत सः
मधुरमीक्षणसम्भवविस्मयः ।
रुचिरभाति विभाति समन्ततो
निखिलवस्तु यदत्र मनोहरं ॥ ३ ॥

मृदुचलत्कदलीतरुराजिभिः
परिवृतं विशदं परमोत्सवं ।
जनयति क्षणमत्र शिलातलं
प्रकृतिसंस्तरजातमिव स्वतः ॥ ४ ॥

समधुपुष्पचयाञ्जलिसन्ततिं
विटपितः सरसः कमलोत्सवं ।
विहगतः प्रमदाद्रुतमुन्नतं
प्रकृतिरत्र निरन्तरमीप्सति ॥ ५ ॥

मलयवायुषु सुन्दरवर्त्मसु
तरुषु वा विहरन् सुमनश्चयः ।
असितपत्त्रनिशागतभीपमः
कुतुकमातनुते मधुरं न किं ? ॥ ६ ॥

उपलजातमिहालमदृश्यतां
क्वचिदहो ! क्वचिदप्यतिदृश्यतां ।
क्वचिदिदं जलमत्र गभीरतां
क्वचिदवैति दृढामगभीरतां ॥ ७ ॥

वहति सा तटिनी मधुरं क्वचि-
दतिपवित्रविचित्रजला नवा ।
क्वचिदनूनविशुष्कलतावलि-
कुसुमपत्रफलालिभयावृता ॥ ८ ॥

क्वचिदनन्तफलावलिशोभितो
व्रततिबाहुविशोभितविग्रहः ।
नतशिरा विटपी कलगुञ्जितः
उपरि निर्झरिणीमतिशोभते ॥ ९ ॥

मृदुविमर्दितपद्मदलाङ्गुलिः
भ्रमभीतविलासभरोऽनिलः ।
इह विचुम्ब्य नदीं दयितामिव
किमपि नर्त्तयति श्रमवञ्चितः ॥ १० ॥

मधुर-कोमल-चारुमनोरमं
विपिनमत्र कदापि नवीनतां ।
न विजहाति कथञ्चन निन्दितां
श्रयति नो खलु कृत्रिमभूष्यतां ॥ ११ ॥

क्वचिदिहामितचारुलतावलि-
परिवृतास्तरवः समदृश्यतां ।
अभिगता अपि सूक्ष्मविलोकिभि-
रनुमिता व्रततिश्लथशाखया ॥ १२ ॥

विटपिनः क्वचिदाचरणं शिरो-
ऽवधि लताभिरनिन्दितकान्तिभिः ।
परिवृता निवसन्ति नितम्बिनी-
मृदुलबाहुधृता युवकाइव ॥ १३ ॥

क्वचन काननीलविभातति-
र्नववलाहकभातितताविह ।
विलयमेति कदापि न लक्ष्यते
क्वतितमैरपि तिग्मसमीक्षिभिः ॥ १४ ॥

प्रमदमत्त-समुद्धत-कुञ्जर-
कलभकावलिमर्द्दितपङ्क्तिभिः ।
प्रतिपदं न तमालमहीरुहै-
र्मधुरमोदभरः किमु कीर्य्यते ? ॥ १५ ॥

मदविलोलशुकाहतदाड़िमी-
फलभरादिह निर्गतवारिभिः ।
क्वचिदलं सततं खलु दुर्द्दिनं
भवति शीतसमीरनिषेवितं ॥ १६ ॥

कपिविकम्पित-साल-रसालकात्
निपतितो कुसुमालिरजोभरः ।
सरसकोमलकान्तनवप्रभः
स्थगयति प्रथितां पदवीं चिरं ॥ १७ ॥

भगवतश्चरणस्मरणादिव
प्रतिपदं विटपी व्रतशोभितः ।
नयनवारिविभं विकिरत्यहो !
किशलयं कुसुमं च निरन्तरं ॥ १८ ॥

शमदमव्रतजातपरा इव
विटपिनः सततं भगवद्गताः ।
विहगसर्पकुलायविभूषिताः
इह वहन्ति जटा भृशमादरात् ॥ १९ ॥

प्रतिपदं विपिनावलिदेवता-
नवनिकेतनवन्ननु राजते ।
समदभृङ्गनिनादपरिस्तुत-
किसलयावलिमण्डपसञ्चयः ॥ २० ॥

महिषराजय एव शिलीमुखैः
शशगणैरपि साकमिह क्वचित् ।
असितकण्ठचयैः सततं मुदा
तिमिरराशिमिमां जनयन्त्यलं ॥ २१ ॥

मृगमदावलिकम्पितमानसा
भ्रमरपङ्क्तिरिहैव निरन्तरं ।
विपिनतो विपिने कुसुमान्तरे
कुसुमतो विहरत्यभिनन्दिता ॥ २२ ॥

कुश-समित्-कुसुम-प्रकराश्चिरं
पिक-शिलीमुख-पञ्चमगीतयः ।
मृगविहारतमालवनानिलाः
प्रतिपदं कथयन्ति महात्मतां ॥ २३ ॥

रुरुविहाररतिर्गजबृंहित-
मसितकण्टकदम्बकनर्त्तनं ।
कुररसार्थरवश्च कपिञ्जल-
मधुरकूजितमत्र समन्ततः ॥ २४ ॥

समदभूकरसार्थपदाङ्किको
हरिणचर्व्वणनिर्गतसंहतिः ।
गजमदाव्रमलिना पदवी नवा
चमरगोभिरुरोगतिपङ्क्तयः ॥ २५

प्रतिलतं भ्रमरः कुसुमान्तरे
नवनवं कुसुमासवमापिवन् ।
विकुरुते भ्रमरीमिह सर्व्वदा
सरससादरमन्त्रणकूजनैः ॥ २६ ॥

सरवभृङ्गभृतस्तरवः क्वचित्
मृदुसमीरवशेन विकम्पितैः ।
विटपवाहुभिरत्र वनेश्वरीं
किमु भवन्ति न रोचयितुं क्षमाः ? ॥ २७ ॥

नवरसालनवाङ्कुरसंहति-
रसभरं पिवतः परपोषितात् ।
सरसपञ्चमगीतिरिहामला
विगलिता सततं हरते मनः ॥ २८ ।

सरसि लोहितमत्र सरोरुह-
मुपहतं सनिनादशिलीमुखैः ।
जगदधीशसुखस्तुतिपाठक-
ज्वलनजातमिवाशु विदीप्यते ॥ २९ ॥

उभयपार्श्वसुशोभि-परस्पर-
किशलयावलिवाहुविमर्द्दिता ।
व्रततिराजिरलं पदवीं ननु
स्थगयति प्रथितां कुसुमान्विता ? ॥ ३० ॥

वनचरीसुरतप्रथितालय-
इह विभाति चिराय नवो नवः ।
विहगभृङ्गपतङ्गपिकद्रुत-
प्रलपितावलिचारुनिनादितः ॥ ३१ ॥

क्वचिदिहाम्रमहीरुहपङ्क्तयो
मधुरपक्व-रसालफलोच्चयैः ।
सजलतां रसनां धरणीतलं
ननु नयन्ति च नूतनपीततां ॥ ३२ ॥

क्वचिदशोकतरुः खलु मूलतो
मुकुलितो भवतीव हुताशनः ।
शिशिरधीरसमीरविकम्पितो
विकचपर्णचयश्चलधूमवत् ॥ ३३ ॥

क्वचिदिह प्रथिता नवमल्लिका
विदलिता विशदप्रभया चिरं ।
भ्रमनिपीतसुनीलविभातति
कृतवती धरणीं सितशोभितां ॥ ३४ ॥

मृदुविकम्पितकोमलपल्लवै-
र्व्रततयः क्वचिदत्र वनेश्वरीं ।
रसवतीं चपलौष्ठवतीं सदा
विहितवत्यतिशान्तिविधायिनीं ॥ ३५ ॥

कुसुमितं सहकारतरोरिमं
विटपकं परिलिङ्ग्य सुमाधवी ।
मुकुलिता नवपल्लविता भृशं
कमपि भावचयं जनयत्यहो ! ॥ ३६ ॥

कुरवकामितसुन्दरमञ्जरी
नवनवाः सुषमा विकिरन्त्यलं ।
क्वचिदिह प्रथितां स्मरणीयतां
जनयति स्वतएव मुहुर्मुहुः ॥३७ ॥

क्वचिदनूनपलाशसुशोभिताः
विटपिनो न भजन्ति चिरं किमु ।
तरुनिकुञ्जसमीश्वरसुन्दरी-
विजयतोरणतामिह सुन्दरीं ? ॥ ३८ ॥

भ्रमरकोकिलभिन्नरसालक-
कुसुमसौरभतो विपिनस्थली ।
निखिलजीविमनांसि समन्ततः
कुतुकितानि करोति निरन्तरं ॥ ३९ ॥

सकलवस्त्विह किं मृदु जायते
मधुमयं प्रकृतेः कुतुकप्रदं ?
इतरथा कथमस्य नु ! वस्तुनः
स्वदनलालसया न विहीयते ? ॥ ४० ॥

क्वचिदियं गणिकेव सुलोहित-
किसलयांशुकजालमनाविलं।
धृतवती सरसा सहसागत-
जनमनांसि बलाद्धरते चिरं ॥ ४१ ॥

इह तरौ नवपल्लवसंस्तरे
व्रततिभोभिरहे कुसुमोच्चये।
तृणदले फलमूलभरेऽपि च
ननु विलोक्यत एव सजीवता ॥ ४२ ॥

विशदपुष्पविभाभिरिहावृता-
मसितपुष्पविभां परिलोकयन्।
क इह न स्मरति त्वणामुत्सुक-
स्त्रिपथगायमुनाप्रियसङ्गमं। ४३ ॥

इह सदा ननु कश्चन भूरुहो
ललितदिग्वदनेन्दुदिदृक्षया।
मधुरपुष्पविभूषितमुन्नतं
धरति रम्यविभं सरसं शिरः ॥ ४४ ॥

प्रतिपदं कुसुमानि, पदे पदे
सुरवधूरमणीयलतागृहं।
मणिमयूखचयोऽपि नवो नवो
भवति रञ्जितवारिभरो यथा॥ ४५॥

रुचिरपल्लवराजिविराजिते
व्रततिजातसुशोभिनिकेतने।
ननु भजन्त्यलमोषधयो निशि
सुरतभोगविलोकनदीपतां॥ ४६॥

कुसुमयौवनशोभिवनस्पति-
रुचिरकण्ठमवाप्य नवा लता।
दयितकण्ठगता प्रमदा यथा
खलु विभाति सुपल्लववाहुभिः॥ ४७॥

नवजवाकुसुमप्रतिमोपलः
क्वचिदिहैव विडम्बयति स्वतः।
उदयपर्व्वतमस्तशिलोच्चय-
मपिगतं मिहिरं ज्वलितप्रभं॥ ४८॥

नतशिरस्तरुरत्र दरीगृह
मधिगतामितमण्डपशोभितं।
समधुकं कुसुमं किमितस्ततः
फल-विहार-मधुप्रतिदित्सया॥ ४९॥

न विजहाति तथा रुचिरद्युतिं-
किसलयं निविड़ां नवरक्ततां ।
कमलिनीविपिनं जलदप्रभां-
कमलमत्र नवातपरम्यतां ॥ ५० ॥

अलिकुलं मृदुमञ्जुलगुञ्जनं
पिकगणो मधुरं कुहुनिस्वनं ।
विहगसन्ततिरत्र सुकूजनं
ध्रुवमनेकलयं न विमुञ्चति ॥ ५१ ॥

स्मितविड़म्बितफेनचयं नदी.
कुसुममीचणसन्निभषट्पदं ।
कुसुमपल्लवमञ्जुलतां लता
त्यजति नेह कदापि सुखास्पदे ॥ ५२ ॥

पवनपूरितकीचकरन्ध्रतो
विगलितं मधुरं मृदुनिस्वनं ।
हसितुमत्र भृशं जगतीतले
ध्वनिरहो ! चमते ननु नेतरः ॥ ५३ ॥

परमशान्तिसुधारससेचितः
उपकृतिव्रतसार्थपरायणाः ।
स्वभवनोपनताय न कस्तुकः
विहितवान् करपल्लवकाञ्जलिं ? ॥ ५४ ॥

क इह नो विहगः सततं मुदा
जगदधीशगुणावलिकीर्त्तनं।
विदधदेव मुहुः कलकूजनैः
पुलकितः खलु विन्दति वन्दितां ? ॥ ५५ ॥

विदलदर्द्धपुटात् भ्रमरप्लुतात्
कुसुमतो नवरेणुभरं मुदा।
व्रततये रसिको वनयोषिते
उपहृतीकृतवान् पवनः स्वतः ॥ ५६ ॥

चपलपुष्पकटाक्षविकारितान्
विहरतो मधुपान् पवनेरिता।
प्रतिपदं ह्वयतीव विलासिनी
चपलपल्लवकाङ्गुलिभिर्लता ॥ ५७ ॥

मधुरमधुरमेतं वस्तुसार्थप्रमोद
मभिमतमुपयातं दृष्टिहीनेक्षणेन।
सहचरगणयुक्तो वीक्ष्य मुग्धो मुहुः सः
हृत इव भृशमस्मिन् विस्मयेनामितेन ॥ ५८ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
हिमालयप्रवेशो नाम
दशमः सर्गः।

(मध्याह्नः ।)

अथ पूर्णविभोः कुतूहलात्
समयावर्त्तनसञ्चयादपि ।
उदयावनतीच्चितस्थले
उपतस्थे कमलैकवान्धवः ॥ १ ॥

अपरस्य विभावतो विभां
स्वविभाभिः सहसातिवर्त्तितुं ।
किमु ? दीपयितुं मणिं किमु ?
द्युमणिः स्वाम्वरमध्यमिच्छति ॥ २ ॥

युगपत् सहसा दिवाकरः
करसंघं विनिवेश्य सर्व्वतः ।
तनुते स्म परं कुतूहलं
वचनागोचरभावसाधकं ॥ ३ ॥

युगपत् सकला दिगङ्गनाः
हृदयान्तः सवितुः करानलं ।
विनिवेश्य समां प्रफुल्लतां
भजमानाश्चिरमत्र रेजिरे ॥ ४ ॥

खररश्मिमिषेण भास्करो-
युवकः किं द्रवतामवाप्नुवत् ।
रजतं परमोष्णतामयं
वमति स्मात्र परं निरन्तरं ? ॥ ५ ॥

हतभाग्यविडम्बितान्तराः
कृषका नूनमिहापि भास्वतः ।
धरणीदहनक्षमान् करान्
स्वशरीरेषु धरन्ति हा बत ! ॥ ६ ॥

समयोऽयमहो ! भयङ्कर-
प्रलयस्य प्रतिविम्बकः किमु ?
जनतेतरथा कथं स्वतः
इह याति त्वरयैव पुञ्जतां ॥ ७ ॥

सविधे खरवर्च्चसः किमु
मृदुतेजा भजतीव लीनतां ?
नयनं कथमन्यथा रवि-
करसङ्गं तिमिरं समीक्षते ॥ ८ ॥

हरितां वदनेषु सर्व्वतो-
रवितेजः पतितं निरन्तरं ।
जगदत्तुमिव प्रसारयद्-
रसनां प्रज्वलति स्वभावतः ॥ ९ ॥

अतिभीषणतप्तवालुका-
शुकरुद्धावयवे भुवस्तले ।
शुभभाग्यविडम्बिताद्दते
क इह भ्राम्यति कामतः स्वयं ? ॥ १० ॥

अयनं प्रसरत्वभासित-
मपि साधारणगम्यमुन्नतं ।
जनताचरणाब्जमर्द्दन-
मिह न प्रायश एव विन्दति ॥ ११ ॥

इह पत्ररथः श्रमातुरो
निजनीडालयसाधुसंस्थितः ।
ननु निश्वसनं विमुञ्चति
भ्रमनाडीपरिकम्पकं मुहुः ॥ १२ ॥

इह नीरचरो विहङ्गमो-
रवितेजःसहने समक्षमः ।
नलिनीनवपत्रवारिता-
तपमीड्य सलिलं श्रयत्यहो ! ॥ १३ ॥

युवतौ युवके वयोऽधिके
शिशुसंघेऽपि विराजते भृशं ।
मणिचूर्णततेर्विडम्बको-
जलविन्दुर्मधुरोऽत्र घर्मजः ॥ १४ ॥

दिवसेश्वरभानुतापितो-
जनसार्थः सर्वलोऽपि कातरः ।
वहशः स्मरतीह चन्द्रिकां
सतुषारावलिमप्यनाविलां ॥ १५ ॥

इह को रवितेजसाकुलः
स्वदशावेशनितान्तपारगः ।
नवनीरधरं पुनः पुनः
परिणामञ्च दिनस्य नेच्छति ? ॥ १६ ॥

विदुषां ननु चेतनावता-
मिह केषां हृदयानि सत्वरं ।
सुखशान्तिविधानहेतवे
विरमन्ति चणदां नु ! वाञ्छितुं ? ॥ १७ ॥

नलिनीकुलजीवितेश्वरे
नभसो मध्यमलं समाश्रिते ।
मनुजः सर्वलोऽपि चञ्चलः
स्वगृहान्निःसरतीह नो वहिः ॥ १८ ॥

वदने नवगण्डमण्डले
युवतेर्दर्पणभातितस्करे ।
कमले हिमविन्दुवद्भृश-
मिह राजन्ति पयःकणाङ्कुराः ॥ १९ ॥

अमृतार्णवफेनकोमला-
मपि शय्यां परिहाय मानवः ।
नवचन्दनजीवनोक्षिते
उपले निक्षिपति स्वकं वपुः ॥ २० ॥

वसुधापि दिनेश्वरप्रभां
न विषोढुं क्षमते क्षमा किमु ?
पवमाननिपीतधूलिभी-
रविभाच्छादयतीह किं नचेत् ? ॥ २१ ॥

शरणागतरक्षणं भृशं
परमं पुण्यमितीव बोधयन् ।
तरुरत्र सुपत्रमण्डितः
पथिकस्यार्त्तिमलं हरत्यधः ॥ २२ ॥

महिलामिव यौवनच्युतां
व्रततिं खिन्नविशुष्कपुष्पिकां ।
इह साधु न कस्य पश्यतः
सदयं म्लायति मानसं स्वतः ? ॥ २३ ॥

कमलेश्वरतापजर्जर-
नववृन्तं कुसुमं महीरुहात् ।
पतदत्र वसुन्धरोपरि
ननु लोलुठ्यत एव वायुना ॥ २४ ॥

इह दावशिखी क्वचित् क्वचिद्-
दहकर्म्मी कृतकाननावलिः ।
धरणीभृतमध्यनाविलं
कुरुते भूषणवर्जितं यथा ॥ २५ ॥

अजलादनतो वनान्तरे
विशदस्वच्छपयोभराश्रिते ।
इह जन्तुततीरवि-क्षता
त्वरमाणा ननु धावति स्वतः ॥ २६ ॥

अयतीह निपानजीवनं
महिषः सूर्य्यकरातिकातरः ।
नवपल्लववारिमज्जनं
विदधात्यत्र वराहसंहतिः ॥ २७ ॥

निविडादपि पत्रभूषिते
निविडे स्निग्धविचित्रकानने ।
हरिणाः खलु शाखिनस्तल-
मवलम्ब्य क्षणमेति कौतुकं ॥ २८ ॥

गिरिमस्तुमिवोदितो महा-
निह दावानलसञ्चयो भृशं ।
जनयेत नितान्तदूरतोऽ-
पि भयं चेतसि पश्यतां मुहुः ॥ २९ ॥

शयने स्वपने सुखासने
सुविलासेऽमितसाधुसेवने ।
मधुरालपनेऽपि वासना
निविड़ा नो परिलक्ष्यतेऽधुना ॥ ३० ॥

गिरिनिर्झरनीरमन्दिर-
मिह कस्मै न चिराय रोचते ?
स्वदते न नितान्तशीतल-
जलचुम्बी पवनः क्व जन्तवे ? ॥ ३१ ॥

निविड़ामितपत्रपादप-
नववल्लीपटवेष्टितापि भूः ।
च्युतजीर्णपलाशराजिभिः
पुनरप्यावृतविग्रहास्त्यहो ! ॥ ३२ ॥

दिनयौवनकेऽर्कतापिते
शिखिनां भ्रष्टनवस्फुलिङ्गवत् ।
मरुतं रथमाश्रिता पथि
नवधुलिर्भ्रमतीह सादरं ॥ ३३ ॥

निजचन्द्रकमण्डलावृतं
सुखदेशं श्रयतोऽपि पन्नगान् ।
न हिनस्ति विवस्वदाप्लुतः
कथमप्यत्र शिखण्डिसञ्चयः ॥ ३४ ॥

शयितो हरिरत्र कानने
निविड़े शुष्कगलोऽतितापवान् ।
विवृताननतो मुहुर्मुहुः
रसनां निर्गमयन् श्वसित्यलं ॥ ३५ ॥

प्रखरात्र पयःपिपासुता
करिणां संहतिमन्तमप्यहो !
हरिसञ्चयमेकवर्त्मना
युगपद्धावयति चणाङ्घ्रयं ॥ ३६ ॥

सलिलात् कमलेशविम्बितात्
प्लुतिदक्षो युवदर्दुरावलिः ।
तटमेत्य नितान्तशान्तये
श्रयते भोगिफणाश्रयं सुखं ॥ ३७ ॥

मिथुनं रसिकं पयश्चरं
नलिनीपत्रतलावलम्बनं ।
समवर्णतयाप्यनीक्षितं
कलमुत्कूजति गाहते सुखं ॥ ३८ ॥

रविकान्तमणिः क्वचित् क्वचित्
खरवेगं शिखिनं भृशं वमन् ।
चयकालभयङ्करप्रभा-
भिनयैर्दर्शयति स्वयोग्यतां ॥ ३९ ॥

सरसीसलिलोर्म्मिपावनः
पवनो मध्यमवेगसाधनः ।
कुसुमांशुककर्षणैरिह
लतया साधु सुखेन दीव्यति ॥ ४० ॥

व्रततिर्विटपी च सादरं
फलपुष्पच्छ्तनोरचन्दनैः ।
किमु तोषयतः परस्पर-
मिह तापानलदीप्तिहानये ? ॥ ४१ ॥

श्वगणः श्रमदुर्ब्बलाननो
रसनां निर्जितबालसूर्य्यभां ।
चपलां विदधत् तरोस्तले
स्वपिति श्वासविकम्पितोदरः ॥ ४२ ॥

विहगो भ्रमणान्निवर्त्तितः
स्वकुलायान्तरमाश्रितोऽबलः ।
अशनैरिह पूर्व्वसञ्चितैः
सुबुभुक्षामपि बाधते चिरं ॥ ४३ ॥

भजते मलिनत्वमत्र हा !
कुसुमं स्वाश्रयमाश्रयन्नपि ।
नवनीरधराभमप्यहो !
युवपत्रं श्रयतेऽतिपाण्डुतां ॥ ४४ ॥

हरिदाननभासितानलो
रुचिरं विश्वमिदं दहत्यलं।
कुसुमादिकमन्यथा कथं
क्षणमङ्गारविभं समीक्ष्यते॥ ४५॥

तरुणार्कविशोषिताननमिह
राजीवमलीवनीलभं।
युवनायकपूर्णमहिता
क्व नु! वाला स्थिरयौवना चिरं?॥ ४६॥

मुनयः सलिलान्तरस्थिता-
वियति प्रेरितचारुचक्षुषः।
नवपद्मदले पयोऽञ्जलिं
मिहिरायेह ददत्यनाविलं॥ ४७॥

मिहिरप्रखरातपः क्षणा-
दिह पान्थान् गतितो निवर्त्तयन्।
घनपत्रनितान्तशीतल-
न्तरुमूलं नयतीक्षणासहः॥ ४८॥

छाययापि परिवोधहीनया
साध्वसात् सपदि तीव्रवर्च्चसः।
आश्रयस्य वपुषि प्रलीयते,
का कथात्र ननु चेतनावतां॥ ४९॥

क्वचन कानिह नैव पिपासुता-
स्तपनचञ्चलजर्ज्जरमानसान् ।
विदधतीह बलेन मरीचिका-
प्रणयशालिन एव समन्ततः ॥ ५० ॥

मृदुविकम्पितपद्मसमीरणं
क्वचन को ननु नात्र समिच्छति ?
क्वचन विस्मरतीह समीक्षितुं
द्रुतमहो ! शशिकान्तमणिञ्च कः ? ॥ ५१ ॥

मध्याह्नकालोऽयमतीव तीव्रो-
भयङ्करत्वं प्रकृतेः समन्तात् ।
संस्मारयन्नेष समुत्सुकानां
संस्थापयत्याशु मनःस्वशान्तिं (५२)

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
मध्याह्नो नाम
एकादशः सर्गः ।



( सन्ध्या । )

सरोजसुस्वादुमधून्यजस्रं
पिबन्निवालोहिततां दधानः ।
दिवाकरः पश्चिमसागरस्य
तरङ्गसार्थे प्रतिबिम्बितोऽभूत् ॥ १ ॥

नितान्तरक्ता रमणीव सन्ध्या
वरा विवस्वत्तिलकाङ्कितेह ।
पृष्ठे धरण्याश्चरणौ निधाय
विश्वस्य नूनं कुतुकाय जाता ॥ २ ॥

पयोजमालां धरणीञ्च कामं
विहाय तिग्मांशु-करोऽतिधीरः ।
अशोभतासाविह पादपानां
घणं विहङ्गावलिवत् शिरःसु ॥ ३ ॥

नवीननीलामितपत्रशोभो-
महीरुहो धीरसमीरजुष्टः ।
रक्तातपान्तांशुकभूषितः सन्
नवं नवं साधु भृशं दिदीपे ॥ ४ ॥

समीरसत्रासविचुम्बितासु
नितान्तनीलाम्बपरार्णवाप्सु ।
पतङ्गरक्तप्रतिबिम्बभारो
विराजते चारु चिराय रम्यः ॥ ५ ॥

क्षीणे दिने बन्धुविनाशकाय
क्रोधादिवारक्तमुखोऽस्ति सूर्य्यः ।
तत्रानुरक्ता हरितोऽपि यान्ति
कुसुम्भपुष्पासवरक्तिमाभां ॥ ६ ॥

विभावसोः साधुसमागमेऽत्र
काष्ठा प्रतीची मुदमेति नूनं ।
नोचेत् कथं रक्तपटं वसाना
नितम्बिनीवातुलसज्जितास्ते ॥ ७ ॥

स्वाङ्के निपाताद्द्युमणेः प्रतीची
समुत्कतो रागमिहादधाति ।
शोकेन पद्मं मुदितेक्षणं स्यात्
प्राचीर्षयया नीलमुखीह जाता ॥ ८ ॥

विवस्वतो मोदभृता प्रतीच्या
समं विहारं सरसं चिराय ।
भृशं समाच्छादयितुं सखीव
कादम्बिनीयाय नभोऽन्तदेशं ॥ ९ ॥

तयोर्म्मिहारातुलकानुरागात्
कादम्बिनी सापि बभूव रक्ता ।
मुग्धा सती का चपला चिराय
धैर्य्यं ग्रहीतुं सहते तदानीं ॥ १० ॥

तयोरहो ! रागरसार्णवान्तः
रक्ता निजाङ्गं सुनिमज्जयन्ती ।
कादम्बिनी सा नवविस्मयाढ्यौ
चक्षुष्मतां चित्तमपातयत् सत् ॥ ११ ॥

तां लोहितां फुल्लमुखीञ्च वीक्ष्य
समीर्षयान्या किमु मेघमाला ।
कृष्णाननाभूत् ? सहते क्व वा का
भाग्येन हीनाभ्युदयं सदृक्षाः ? ॥ १२ ॥

अहो ! तयोर्मध्यगताभ्रमाला
सुखेन दुःखेन च संवृता किं ?
रुचिं विमिश्रामुभयोर्धरन्ती
नवेव यद्भावुकदृक्तु जाता ॥ १३ ॥

अनन्तशृङ्गातिविशालशैल-
च्छायां हसन्तं नवनीरदौघं ।
कदाचिदेतद्ध्रुवमन्तरीचं
धृत्वा चिरं तां सुषमामवाप ॥ १४ ॥

लघुः पयोदोऽत्र समीरवेगा-
दितस्ततो धावति यत्र तत्र ।
क्वचिच्चिरं कश्चन नीरदाता-
विचित्रवर्णैर्भ्रमेति शोभां ॥ १५ ॥

ध्यायन्निवालं मिहिरो नलिन्याः
जनिष्यमानं विरहं क्रमेण ।
प्रभाविहीनो मलिनत्वमेत्य
कृशत्वमेवात्र परं जगाम ॥ १६ ॥

रवेरुदन्तं स्वयमेव वुद्ध्वा
नितान्तमूढ़ा खलु पश्चिमा दिक् ।
व्याजेन सा रक्तवलाहकाना-
मन्तःप्रविष्टेव कृशानुराशेः ॥ १७ ॥

ग्रहपतेर्लोहितरम्यविम्ब-
निमज्जनं सुन्दरदर्शनीयं ।
सरस्वदन्तः क्रमशः करोति ।
विलोकयन्तं ननु विस्मयाद्यं ॥ १८ ॥

दिवाकरः सोढुमशक्नुवान् सन्
ज्योतिर्महत् स्वं परिधावमानः ।
शान्तिं ग्रहीतुं किमु पश्चिमाब्धि-
पयोभरान्तर्निममज्ज हाहा !' ॥ १९ ॥

निमज्जिते वारिषु वासरेशे
ककुम्मुखं तिग्मकृषत्वमेति ।
का नाम साधोर्दयितस्य शोकं
सुखेन सोढुं रमणी समीशा ? ॥ २० ॥

वसुन्धरा दीपयितुर्वियोगा-
म्लानानना कृष्णपटाश्रितेव ।
पवित्र-चित्ता परमोपकर्त्तुः
का तीव्रशोकैर्विधुरा न जाता ? ॥ ॥ २१ ॥

नामावशेषं द्युमणिं निशम्य
विहङ्गसार्थोऽपि सुदुःखमाप ।
नोचेत् वियोगार्त्त इव प्रलापी
विहायसा याति कथं द्रुतं सः ? ॥ २२ ॥

दिगङ्गनां वासरशेषतोऽसौ
मूर्च्छा तमोव्याजत आवृणोति ।
अभिन्नचित्ता सदया वयस्या
कानाम सुस्था व्यसने प्रियायाः ? ॥ २३ ॥

लच्यविहीनं कमलं नितान्त-
शोकार्द्दितं सत् प्रचुरं विमुच्य ।
षड़ङ्घ्रिसार्थांश्रु दलान्यमूनि
नेत्राणि हाहा ! निमिमील तीव्रं ॥२४॥

इहाचिरप्रोषितभर्तृकेयं
न पद्मिनी संश्रयते व्रतं किं ?
षड़ङ्घ्रि-रुद्राक्ष-मृणालयज्ञो-
पवीतहंसांशुकधारणेन ॥ २५ ॥

समीरणो धीरसरोजचुम्वी
कुतूहलेनेव समन्ततोऽत्र ।
तरङ्गिनीवक्षसि नावमाशु
चारुक्रमं नर्त्तयितुं प्रवृत्तः ॥ २६ ॥

कदाचिदस्मिन् मधुरः समीरः
ससम्भ्रमस्पृष्टपयोजराजिः ।
उद्धूतनारीवदनालकोऽयं
द्विरेफमुत्कं कुतुकात् करोति ॥ २७ ॥

सङ्कोचिवक्त्रां नलिनीं विलोक्य
याति द्विरेफः खलु केतकीषु ।
तत्रापि कष्टं लभते रजोभिः
न क्वापि शान्तिर्व्यसनाचितानां ॥ २८ ॥

वियोगभीतातुरचक्रवाक-
द्वन्द्वं विवस्वल्लयमासमीक्ष्य ।
परस्परश्लिष्टमनो दधत् सत्
क्षेत्रेण भिन्नाग्रममाजगाम ॥ २९ ॥

प्रज्वाल्य दीपं खलु वादयन्ती
शनैः शनैः शङ्खमलं सुखेन ।
पुराङ्गना मूर्त्तिमतीव भक्ति-
रारात्रिकं चित्तहरं चकार ॥ ३० ॥

अर्द्धोन्मुखीभिर्नवमल्लिकाभिः
सुमालतीभिः स्मितसंस्तुताभिः ।
गीतस्वभावोज्ज्वलचित्रशोभं
काचित् क्वचित् गुम्फति चारुहारं ॥ ३१ ॥

कलावती काचन कौतुकेन
कण्ठे स्रजं पुष्पमयीं बभार ।
क्वचिच्च कृष्णोज्ज्वलकेशवेणीं
स्रजान्यया चारु बबन्ध काचित् ॥ ३२ ॥

क्वचिन्निशाश्वश्रवसाधुशान्तिं
विचिन्त्य लेभे युवतिः प्रमोदं ।
काचिन्नवोढ़ा प्रियनिर्दयत्वं
ध्यात्वा भृशं भीतिमवाप भूयः ॥ ३३ ॥

पक्षौ विधुन्वन्निह काकसंघो
हित्वा वुभुक्षां चलति स्म नीड़े ।
क्षुत्कातरः क्षाममुखो दिवान्धो-
भोज्याशये निःसरति स्वनीड़ात् ॥३४ ।

कश्चित् श्रमक्लिष्टशरीरभारं
वहन् दिनान्ते खगहोमुखोऽभूत्
तस्य श्रमक्षालन-शान्तयेऽत्र
द्वारं गतासीद्दयिता सपुत्रा ॥ ३५ ॥

तरङ्गिनी तीरकुटीरदीप-
विभातचारुप्रतिविम्बजातैः ।
समीरधीरा प्रचलत्सुनीरा
खेलन्मराला सुषमामवाप ॥ ३६ ॥

अन्तर्हिते भास्वति शोकताप-
खिन्नेव सन्ध्या विलयं जगाम ।
पतिव्रता का दयितानुगत्यां
वैमुख्यमाप्नोति नितान्तधीरा ? । ३७ ॥

ताराच्छलात् साध्वपरार्णवान्तः-
सूर्य्यप्रपातोत्थितशीकराम्भः ।
सप्तर्षिसन्ध्यार्च्चनपुष्पजातं
किं वान्तरीक्षे सततं चकास्ति ? ।। ३८ ।।

महर्षिपाथोऽञ्जलिभारपात-
प्रक्षालनात् किं नवरागभारः ।
निशामुखस्यास्य विपत्तिमेति ?
यद्वा विधानं नियतेर्विचित्रं ॥ ३९ ॥

विडम्बयन्ती सुरसुन्दरीणां
दृशं पुरस्तात् किमपि ज्वलन्ती ।
एकैकशः सा रजनीवयस्या
नभस्यनन्ते समुदेति तारा । ४० ॥

विवस्वदत्यप्रणावियोगखेद-
समाहताया मलिनाननायाः ।
हाहा ! नलिन्याः किमु शान्तयेऽत्र
ज्वलन्ति दीपा भृशमौषधिश्च ? ॥ ४१ ॥

भास्वत्कराच्छन्नविभा नितान्तं
ग्रहाः समाभान्ति किलान्तरीचे ।
पयोदमुक्तो मिहिरोऽधिकं सः
विनष्टशत्रुर्मनुजश्च भातः ॥ ४२ ॥

प्राचीस्मितस्फूर्त्तिवदिन्दुरत्र
शनैः शनैः साधु विकाशमेति ।
तमिस्रपङ्क्तिः खलु तस्कराभा
पलायते साध्वस-शासनीया ॥ ४३ ॥

"अस्तं गतः पङ्कजजीवितेशः"
प्रवृत्तिरेषा वितथा नवेति ।
ज्ञातुं समन्तादुदयाद्रितुङ्ग-
शृङ्गे विधुः स्थापयति स्म पादं ॥ ४४ ॥

आसन्नचन्द्रोदयतः प्रयाति
प्राची नितान्तं विरलप्रकाशैः ।
पुष्पावली साधुपतद्रजोभि-
र्यथा वनालिर्नवधूसरत्वं ॥ ४५ ॥

कुमुद्वतीजीवितनाथतोऽस्मात्
शनैः शनैश्चन्द्रिकया पतन्त्या ।
मन्दस्मितोत्फुल्लमुखं निशायाः
प्राप्तप्रियायाः शुशुभे नितान्तं ॥ ४६ ॥

शनैः शनैस्त्यक्तनितान्तरागे
कलानिधौ याति नभोऽल्पदूरं ।
समुत्सव-प्रीति-विलास-तृप्ति-
मयो वभूवेव नु ! जीवलोकः ॥ ४७ ॥

सुप्तं मनोजं सुधया सुधांशु-
र्विबोधयामास सुखं पुरस्तात् ।
सुहृद्विहीनं ननु जीवनं सन्
निरर्थकं मन्यत एव नित्यं ॥ ४८ ॥

कुमुद्वतीयं रजनी-वयस्या
स्पर्शाद्विधोरचि समुन्मिमील ।
भृङ्गावलीझङ्कृतिगीतिजातै-
र्भर्त्तुर्जयं साधु मुहुर्जगौ च ॥ ४९ ॥

कुमुद्वतीप्रेमविलासलोलः
सुधांशुरेकोऽपि समीरसेवेः ।
प्रियाश्रये वारिणि चारु मग्नः
किमप्यसंख्यत्वमहो ! प्रयाति ॥ ५० ॥

विधोः करस्पृष्टसुधांशुकान्त-
मणिर्बभौ स्नेहभशीकरार्द्रैः ।
स्निग्धप्रियस्पर्शमवाप्य को वा
तुष्यन् नितान्तं गलतीव नान्तः ? ॥ ५१ ॥

मृदुकुसुमितवल्लीपल्लवौष्ठप्रलुब्धो
विकचकुमुदवक्त्रामोदसम्भारदिग्धः ।
सलिलनिधिं-विलास-स्नानसिक्तोऽतिधीरो
वहति मधुरमस्मिन् मन्दमन्दं समीरः ॥५२॥

चपलमधुपझङ्काराकुला भव्यभावा
कुसुमनिकरहासोत्साहिता चारुवेशा ।
नवनवघनमालालङ्कृता शेषसन्ध्या
किमपि किमपि साधु प्रार्थिता सन्दिदीपे ॥५३॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
सन्ध्या नाम
द्वादशः सर्गः ।

(रजनी।)

दिनमणेर्लयतोऽभ्युदयावधि
प्रकृतिदृश्यमहो! वचनाद्बहिः।
विधुविभा क्वचिदत्र तमः क्वचित्
क्व च विभा-तमसोः परिरम्भणं ॥ १ ॥

अतिविचित्रपवित्रसुखास्पदे
नवनवे प्रकृतेरिह कानने।
अगणितो नवदृश्यचयो ज्वलन्
सहृदयाय चिराय सुरोचते ॥ २ ॥

क्षिति-सरो-वियदम्बुधि-पादपाः
रुचिरचारुतरत्वविभूषिताः।
प्रकृतिभावविमुग्धमनोजुषां
पृथगिवेह भवन्ति मनस्विनां ॥ ३ ॥

इह भवन्ति खरा ध्वनयः क्वचि-
न्न जगतः श्रुतिदुःखकराः स्वतः।
जगदनन्तनितान्तगभीरता
सुखविनिद्रविभापि च केवला ॥ ४ ॥

तरुकुलायनिविष्टविहङ्गम-
मधुरकूजनजातमिहेप्सितं ।
गृहनिवासिमुनां निनदोऽपि वा
ननु भिनत्ति नितान्तगभीरतां ॥ ५ ॥

इह जनं स्वप्रदध्वनिसन्ततिः
सवलमप्यतिभीषयति क्षणात् ।
निजतनुप्रतिविम्बभरोऽप्यसौ
प्रकुरुते स्फुटकण्टकितं मुहुः ॥ ६ ॥

क्वचन लीयतएव पिपासुता
क्वचन वासनया प्रपलाय्यते ।
न निपतन्ति सदा नयने क्वचित्
प्रमदमत्सरभावभरा अपि ॥ ७ ॥

न घटते कठिनः कलहध्वनिः
न भजते व्यसनं हृदयं स्वतः ।
युगपदेव हठादमितं मनः
इह धरां त्यजतीव सकौतुकं ॥ ८ ॥

सुमधुरा स्फुटनादनिनादिता
रसवती रसिकेव रसा स्वयं ।
अमृतचारुनिजाङ्कतलाश्रयं
ननु ददाति सुखेन च जीविने ॥ ९ ॥

इह नभस्यमिताः किल तारकाः
सुरपुरीयुवतीच्चणसम्मिताः ।
कमपि भावमभावितमुज्ज्वलं
सुमनसां जनयन्ति निरन्तरं ॥ १० ॥

अपहृतेऽपि रवौ लभते न यः
किमपि भोक्तुमहो ! अतरचकैः ।
परिवृतोऽपि न यः श्वसिति चणां
सममुखं स्वपने किमु नो तयोः ? ॥ ११ ॥

य इह वेत्ति परस्य सुखासुखं
न दयितामपि विश्वसितीप्सितां ।
न खलु सोऽपि सुखं स्वपनाङ्कके
निजतनुं विवशः चिपति चणात् ॥ १२ ॥

हृदयमाधिसमायुधविचतं
प्रियवियोगविषैर्मलिनीकृतं ।
अहह ! यस्य भयङ्करदुःखदा
भवति रात्रिरियं ननु तस्य सा ॥ १३ ॥

रसवतीव नितान्तमदालसा
नवसुधाविभवस्य स्मितप्रभा ।
निपतिता तटिनीसिकतामयो-
रसि सुखं स्वपितीह न किं चिरं ?॥१४॥

व्रततिकुञ्जततावि‌ह चन्द्रिका
सरससुन्दरपत्रचयान्तरे ।
विलसनावलितः प्रविशन्तयहो !
रसभरात् क्रमशः पततीव किं ? ॥ १५ ॥

असमशाख-महीरुहकानने
निविड़पत्रचयान्तरितान्तरे ।
समपराधनितान्तनिपीड़ित-
मिव तमो निभृतं ननु तिष्ठति ॥ १६ ॥

हृदयमर्म्मतलात् सततं चता-
दहह ! यस्य मुहुः करुणध्वनिः ।
बहिरुपैति न किं ननु तस्य सा
सितरुचेस्तमसोऽपि विभा समा ? ॥ १७ ॥

इह गिरिः सरसी धरणीरुहः
कुसुमिता व्रततिस्तटिनी नदः ।
कुसुमराशिरसौ हृदयं जग-
दभिनवां नवतां प्रतिपद्यते ॥ १८ ॥

इह गिरिः स्मरतीव निरन्तरं
कमपि शाखिचयोऽत्र तपस्यति ।
कमपि शान्तिमिता व्रततीततिः
कमपि भक्तिवशादिव वन्दते ॥ १९ ॥

प्रकृतिचित्रपवित्ररसोदधौ
परिनिमज्जयतीह मनः कविः ।
क्वचिदलौकिकभावभराहितं
धरति तज्जडतामिह कस्यचित् ॥ २० ॥

दिवसहट्टनिनादविमोचिता
शममिता प्रकृतिः स्थिरनिश्चला ।
परमदेवसमर्चनहेतवे
किमु समाधिमिहाश्रयते स्वतः ? ॥ २१ ॥

प्रकृतिसाधुसमाधिविघातभी-
परवशो धरणीरुहसञ्चयः ।
क्वचिदलं शिर उन्नमयन्निह
वितनुते जडतां स्थिरनिश्चलः ॥ २२ ॥

इह गभीरनिशासमये सदा
मृदुमृदुर्धरणीतरजो ध्वनिः ।
कुत उदितश्च मनो जगतामहो !
गमयति क्षणिकां समुदासतां ॥ २३ ॥

अयमुदेति नवो निनदो मृदुः,
न खलु वेत्ति विमूढतमं मनः ।
अनुमिनोम्युपवीणयति क्षणं
जगदधीशमलं प्रणतो भवः ॥ २४ ॥

स निनदो वचनं समतीतवान्
हृदयवृत्तिचयं विलयं क्षणात् ।
नयति भावततिं जनयत्यहो !
श्रवणकर्त्तृजनस्य मनस्विनः ॥ २५ ॥

क इह तिष्ठति भाग्यविभूषितो
जगति जीवधरो ननु तादृशः ?
हृदयभावचयं तदुपस्थितं
कथयितुं क्षमते वचनेन यः ॥ २६ ॥

द्युतिमती रसिका प्रकृतिः स्वय-
मगणितोङ्मिषिणा पुनः पुनः ।
रुचिमुषा नयनेन धरातले
स्वसुषमां मधुरां किमु पश्यति ? ॥ २७ ॥

निजमपि स्मरतीह न भावुको
लयमुपैति मुहुः प्रकृतेरसे ।
कुलिशनिर्म्मितमानसमप्यहो !
कुसुमवन्मृदुतामिह विन्दति ॥ २८ ॥

इह नितान्तसुचञ्चलमानस-
मपि जगत् पुरतः प्रतिभाषितं ।
ननु विहाय नवे जगदन्तरे
क्षणमतिस्थिरतां लभते स्वतः ॥ २९ ॥

विशदकोमलकान्तचलांशुक-
द्युतिविडम्बिनि नीरधरे क्वचित् ।
नवसुधाविभवोऽमृतसन्ततिं
ननु विकीर्य्य विभाति निरन्तरं ॥ ३० ॥

नवरसां रसिकामभिसारिकां
हसितुमेव नदी विवशा किमु ?
इह समस्फुटगीतसमाश्रिता
मधुरमम्बुनिधावभिधावति ॥ ३१ ॥

मधुरशान्तिसुधाततिसागरे
प्रकृतिनृत्यगृहे विजने वने ।
विहगराजिरलं स्ववशा मुहुः
क्षिपति चित्तहरीं कलकाकलीं ॥ ३२ ॥

कुतुकतः किमु साधु दिगङ्गनाः
शशधरस्य करानिह सादरं ।
परिविधृत्य शुभे हृदये स्वयं
दधति पाण्डुरतामतिभासुरां ? ॥ ३३ ॥

भयसमाश्रिततस्करवत् तमः
किमपि गच्छति यत्र च यत्र च ।
प्रसरति द्विजराजकरः क्षणाद्-
भ्रमभ्रमं लिह तत्र च तत्र च ॥ ३४ ॥

कुसुमराजिरिह क्रमशो मुदा
वदनतोऽभ्यपनीय तमःपटं।
मृदुमृदुस्मितसन्ततिभिश्चिरं
क्षितिमिमां ननु हासयति स्वयं॥ ३५॥

कुमुदिनी मुदिता मृदुहासिनी
सुसरसीसलिलामलदर्पणे।
निजमुखं परिवीक्ष्य निशापतेः
किमु विचिन्तयति ह्यनुरूपतां?॥ ३६॥

कुमुदिनीविपिने मधुलोलुपो
निपतितो भ्रमरः सरसः शनैः।
इह विहस्य पयोभरवीचिभिः
सुखमलं लभते मृदुदोलितः॥ ३७॥

तरणिनिन्दिदले सलिलोर्मिषु
निपतिते चलिते कुमुदाङ्कतः।
निवसतो मधुपादिव नाविका-
न्मधुरगुञ्जनमाशु विनिःसृतं॥ ३८॥

क्षितिरियं स्वपितीव निनादिता
वियदपि श्रयते ससुरं महत्।
अलसतां विवशेव सचन्द्रिका
परिनिमज्जति दिक्षु घनावली॥ ३९॥

मधुरकोमलहासविशोभितं
कुमुदिनीवदनं सरसं शशी ।
किमु निरीक्ष्य विघूर्णितमस्तको
गगणतः पततीह शनैः शनैः ? ॥ ४० ॥

अमितभावविदीपिततारका-
भुजविवेष्टनगोऽपि निशाकरः ।
परिनिरीक्ष्य निशां विवशेक्षणैः
किमपि चिन्तयतीव मुहुर्मुहुः ॥ ४१ ॥

मृदुसमीरविजृम्भितचञ्चले
तटवतीसलिले रजनीपतिः ।
निपतितः प्रतिमामिषतश्चिरं
शशिमयीं विदधाति नदीमिह ॥ ४२ ॥

सुमृदु गायति धीरसमीरणः
सरससान्द्रनिराशविभूषितं ।
अनुगता तटिनी मधुरोर्म्मिभि-
र्भरति तस्य सतानलयं चिरं ॥ ४३ ॥

इह निराशसमीरणगीतिकां
तटवतीमधुरातुररोदनं ।
स्वपनघोरजडानि दिगङ्गना-
समलसश्रवणानि पिबन्त्यलं ॥ ४४ ॥

विचलिते सरसीसलिले चिरं
कुमुदिनी मधुरं मृदु नृत्यति ।
समलसैर्नयनै रजनीश्वरो
मुहुरलम्प्रमदो ! पिबतीव तां ॥ ४५ ॥

कुमुदिनीमधुरेणुविभूषितो
विशदपक्षविहङ्गमसञ्चयः ।
कुतुकतः सरसीसलिलोर्म्मिषु
विततचारुरवः खलु दीव्यति ॥ ४६ ॥

विरहिणीनयनं शशिकान्तता-
मिह लभेत किमु श्लथबन्धनं ?
इतरथा कथमत्र ततः स्वतः
सलिलराशिरसौ निपतत्यलं ? ॥ ४७ ॥

विलसनावलिदिग्धमनोजुषा-
मिह विजृम्भत आशु समन्ततः ।
कुमुदराशिमयत्नमुपागतो
व्यसनहेतुरसौ कुसुमायुधः ॥ ४८ ॥

शशधरामृतचारुमरीचिभि-
र्विशदतामिह याति जगत्यलं ।
तिमिरमाश्रयते द्युतिवञ्चितं
ननु रथाङ्गविहङ्गममानसं ॥ ४९ ॥

अहह! शोकशतामिततािड़त-
जनमनो नलिनीमयतामिह।
उपगतं स्तिमितं परिदूयते
शशिनि दीव्यति चारु नभोगृहे ॥ ५० ॥

नवसुधाविभवो रजनीपति-
र्निभृतमत्र सुखं निशया समं।
नवनवोदितदेवनविभ्रमं
विनिमयन्नमृतं विकिरत्यलं ॥ ५१ ॥

इह विहङ्गमकूजनमन्तरा
समुदितं श्वभयङ्करगर्ज्जनं।
निविड़तां जगतो वचनाद्बहिः
प्रचलितं हरतीव मुहुर्मुहुः ॥ ५२ ॥

क्वचिदतिमधुराभामुग्धतालङ्कृतेयं
क्वचिदमितविलापध्वानभीमातिभीमा।
क्वचिदनवरतात्मध्यानगम्भीरभावा
क्वचिदसमविलासैश्चञ्चलेवाशु भाति ॥ ५३ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
रजनी नाम
त्रयोदशः सर्गः।

( प्रभातम् ! )

अथामृतांशुप्रणयाश्रितापि
निशा कृशत्वं क्रमशः प्रपेदे ।
विधेर्विधानं प्रकृतेर्नियोगो
विधातुरिच्छा च न सन्ति वन्ध्याः ॥ १ ॥

अल्पावशिष्टापि विभावरीयं
हिमान्यजस्रं विवशा मुमोच ।
प्रत्यग्रभर्त्तृव्यसनातिभीता
कास्तु प्रसक्तौ विरतिं लभेत ? ॥ २ ॥

कुमुद्वतीभिर्निशया च सार्द्धं
क्रीडारतेर्जागरणश्रमाद्वा ।
स्वभावसौन्दर्य्यसमीक्षणाद्वा
स्वप्नं प्रयात्यस्तगिरिं निशेशः ॥ ३ ॥

विहङ्गसार्थः किल काकलीभि-
र्नानाविधाभिः श्रुतिमोहिनीभिः ।
ईशं जगच्चारुतरं सृजन्त-
मसावुपस्तौति नितान्तभक्त्या ॥ ४ ॥

कौमुद्यवाच्यत्वभियैव किन्नु
मुमोच सा पूर्णमपि क्षपेशं ?
गते वसन्ते धरणीरुहाणां
का नाम शोभाः स्थिरतां लभन्ते ? ५ ॥

महर्षिदेवर्षिमुखात् प्रवृत्तः
सामध्वनिः श्रोत्रसुखाभ्युपेयः ।
सत्त्वादिचित्तेष्वपि भावदिग्धां
शक्तिं नवां योजयितुं समीशः ॥ ६ ॥

सतो वियोगव्यसनाहतस्य
रथाङ्गनाम्नोर्युगलस्य हाहा ।
सुदीर्घनिःश्वासनितान्ततापा-
द्दिवात्र किं क्लाम्यति यामिनीशः ॥ ७ ॥

कुमुद्वती या नववेशरम्या
रात्रौ सरो हासयति स्म भाभिः ।
सैवात्र शोभारहिता बभूव
चिरस्थिरश्रीर्जगति क्व कस्य ? ॥ ८ ॥

विलोलनव्यालिविडम्बिनीषु
नवासु वीरुत्सु सुपुष्पितासु ।
पुष्पेषु पुष्पेषु सदा हिमानी
लुठन्त्यलं लोलकवद् दिदीपे ॥ ९ ॥

महीरुहो भक्तिविभूषितान्तः
हिमाक्तपुष्पार्घ्यमलं सुखेन ।
क्वचित् किमस्मिन् महते सवित्रे
ददौ प्रवालाञ्जलिभिः समन्तात् ? ॥ १० ॥

प्रभातवातस्तरुतो लतातः
प्रफुल्लपुष्पावलितोऽप्यनल्पं ।
गृहीतगन्धावलिपूतदेहो
निरन्तरं मोदयति स्म चेतः ॥ ११ ॥

ताराप्रभाभिः शशिनो विभाभि-
र्विभावरीभाभिरिहोज्ज्वलाभिः ।
कुमुत्स्मिताभाभिरलं प्रदीपौ-
षधिप्रभाभिः सममेव लुप्तं ॥ १२ ॥

नवोदितार्कारुणमन्तरीक्षं
कलानिधिः पाण्डुरहो ! बभूव ।
परस्परं स्फूर्त्तिवशात् किमत्र
दिगङ्गनाः सुन्दरमालपन्ति ? ॥ १३ ॥

कुमुद्वतीदुःखशिखिप्रदग्धाः
मुञ्चन्त्यलं किं तरवो हिमाश्रु ?
विहङ्गमास्तारनिनादजातैः
शोचन्ति हाहेति मुहुर्मुहुः किं ॥ १४ ॥

विचित्रवेशा खलु पूर्व्वसन्ध्या
निशा समं याति लयं तदानीं ।
नवप्रसूता तनया सुखेन
जीवत्यनल्पं जननीं विना क्व ? ॥ १५ ॥

एवत्पतत्तु त्पतनाभिभूताः
दिगङ्गनास्ताश्चपलाः सुखेन ।
धृत्वा मयूखावलिमर्कविम्वं
कुतूहलादव्धित उद्धरन्ति ॥ १६ ॥

नक्षत्रपुष्पाणि वियद्गतानि
दिवाकरोष्णोज्ज्वलरश्मिसंघैः ।
प्रम्लानिमासाद्य मुहुः क्रमेण
विलिल्यिरे मूलनिदानगेहे ॥ १७ ॥

द्विरेफसार्थोऽत्र विलासशोभी
कुतूहलामोदनितान्तहृष्टः ।
समन्ततः साधु कलं सुगुञ्जन्
जग्राह वन्दित्वमलं विधातुः ॥ १८ ॥

कुमुद्वतीं तां चिरसेवमाना-
मपि क्षणां श्रीरहितां ददर्श ।
नो भृङ्गसार्थश्चपलो दुरात्मा
स्वार्थायनो नैव कृतघ्नताभाक् ॥ १९ ॥

नितान्तरागाहृतचक्रवाक-
द्वन्द्वं वियोगव्यसनाद्विमुक्तं।
परस्परं तत् स्वरताविहीन-
माश्लिष्य तोषाम्बुनिधौ ममज्ज॥ २०॥

निशावगुण्ठांशुकमुक्तदेहाः
धरारुहः पल्लविता लताश्च।
तुषारसिक्ताः सरितो विधातुः
प्रत्यग्रसृष्टा इव रेजिरेऽत्र॥ २१॥

प्रभातधीरानिलसेव्यमानाः
स्नानोत्थिताः साधुपवित्रकामाः।
नारायणध्यानसुधाब्धिमग्नाः
धरासुरा नूनमिहावभूवुः॥ २२॥

अनल्पचारुप्रकृतिस्मिताभा-
मतिप्रफुल्लां नवपुष्पराजिं।
आदाय रम्या ननु वीरुधः काः
आनन्ददाने विरता भवन्ति?॥ २३॥

तुषारहारावलिशोभमानाः
प्रफुल्लपुष्पालिसमीक्षणीयाः।
प्रकम्पयन्तस्तरवः शिरांसि
समीरभाराद्रुचिरं विरेजुः॥ २४॥

गतेऽमृतांशावरुणप्रभाभिः
सन्तर्ज्जिता साध्वसकातरेव ।
अप्यन्यदृष्टिं परिहर्त्तुकामा
कुमुद्वती सा निमिमील साध्वी ॥ २५ ॥

द्विरेफमाला कुमुदावलीनां
दुःखप्रतीकारममन्यमाना ।
द्रुतं प्रतस्थे कुटिलो विपन्नं
स्वार्थैकभक्तः समपेक्षते क्व ? ॥ २६ ॥

विकीर्य्य कान्ती रुदितेऽरुणेऽत्र
तमो नितान्तं विलयं प्रपेदे ।
समुज्ज्वलज्ज्वालकृशानुकृष्ट-
तृणस्य शेषो ननु भस्मनैव ॥ २७ ॥

नवीनदूर्व्वादलसञ्चयेषु
हिमावली रात्रि-सुसम्भवेयं ।
नन्विन्द्रनीलाकरमेदिनीषु
मुक्तावलीवन्नितरां रराज ॥ २८ ॥

गृह्णाति शोभां परमां पयोजं
जहाति तामेव कुमुद्वतीयं ।
उदेति सूर्य्यो विधुरस्तमेति
सुखी रथाङ्गोऽसुखवानुलूकः ॥ २९ ॥

शोभा नवा स्फूर्त्तिरलं नवीना
नवं बलं सा सुषमा नवैव ।
नवोद्यमः शान्तिसुखं नवीनं
सर्व्वं नवं नूतनसूर्य्यभातौ ॥ ३० ॥

विचुम्बितानन्तसरित्तरङ्गो
गृहीतवल्लीततिपाणिशाखः ।
धीरावधूताब्जदलः समीरो
हरत्यलं प्राणिमनःक्लमौघं ॥ ३१ ॥

कुमुद्वती मुद्रितनैत्रपत्रा
विभावरी लब्धलया बभूव ।
तारापशोभेति नितान्ततीव्र-
शोकादिव म्लायति यामिनीशः ॥ ३२ ॥

सरोजराजिः कुमुदावलिश्च
समप्रकाशैः सममीलनैश्च ।
तुल्यानुरागं नयनं मनश्च
निरन्तरं ते हरतः प्रसह्य ॥ ३३ ॥

वने वने भूमितले लुठन्तीं
विमर्द्दितां म्लानमुखीं नवीनां ।
शेफालिकां वीच्य सदाशयः कः
स्मारन्नास्मिन् विधवां वयःस्थां ? ॥३४॥

हिमांशु सन्त्यज्य शनैः शनैः सा-
वगुण्ठनं मुद्रणमाविहाय ।
उन्नीय पत्रे क्षणमत्र मित्रं
किं पद्मिनी चारु चिरं पपौ न ? ॥ ३५ ॥

प्राचीकपोलाभरणातिरक्त-
विवस्वदुज्ज्वलभानुजालैः ।
सरित्स्खलन्ती नवरञ्जिताम्बु-
र्नवानुरक्तेव चिरं रराज ॥ ३६ ॥

विलासतः स्पृष्टसरोजराजिः
कुमुद्वतीनां मकरन्ददिग्धः ।
हिमालिसम्मन्थरवेगभागः
प्रभातवातो मधुरं स्म वाति ॥ ३७ ॥

नवानुरागादिव रक्तिमाभो
राजीवनाथो रुचिरं विराजन् ।
तमो निरस्यैव रसातलान्त-
स्तलादिवास्मिन् जगदुद्दधार ॥ ३८ ॥

निशावसानाद् व्रजनिर्गताभिः
सुधांशुकान्तिप्रविडम्बिनीभिः ।
गोभिः सदास्मिन् नगरान्तसीम-
स्थलं विरेजे धवलायमानं ॥ ३९ ॥

प्रतिप्रभातं नगरं सुखेन
प्रत्यग्रकल्यान् सुसुवे ह्यनन्तान् ।
तान् प्राणिनः सुन्दरमन्यथा चेद्-
भवत्यहो ! प्राणिमयं कथं तत् ? ॥ ४० ॥

दिनेश्वरे चारु मरीचिजालं
किरत्यलं भीषितमन्धकारं ।
विपन्नदुष्टात्ममनुष्यकल्पं
दरीगृहं सत्वरमाश्रयेत ॥ ४१ ॥

भावञ्चिता मर्द्दितपुष्पमाला-
स्तीव्रोपभुक्ता महिला नवाश्च ।
तुल्यामवस्थामधुना व्रजन्ती-
र्न पश्यतः कस्य मनो दुनोति ? ॥ ४२ ॥

पत्रे हिमानीजलसाधुसिक्ते
प्रवालभास्वत्कर‌राजिरत्र ।
स्फुटं पतन्ती तरुमात्तपत्रं
प्रवालमात्राभरणं चकार ॥ ४३ ॥

महीरुहः कश्चन धीरधीर-
समीरसाहाय्यभरेण चारु ।
अर्घं सवित्रे सतुषारपुष्पं
भक्तिप्रभावादिव यच्छति स्म ॥ ४४ ॥

विवस्वतश्चारुकरं गृहीत्वा
फुल्लाननाब्जा ननु पद्मिनीयं ।
आनन्दवन्द्या मधुपव्रजेन
ग्लानिं विशालामपि सा मुमोच ॥ ४५ ॥

प्रत्यग्रफुल्लाब्जपरागवाही
विकम्पितानन्ततुषारिवृन्दः ।
धीरः समीरो मृदुपुष्पचुम्बी
संसेवते प्राणिनमत्र भूयः ॥ ४६ ॥

भीतः किमस्मिन्ननलः सुधांशु-
र्नवोदिते भास्वति नैजतेजः ।
किरत्यजस्रं ? कथमन्यथा तौ
तेजोविहीनाविव राजतोऽत्र ? ॥ ४७ ॥

नवोदितोष्णांशुकराश्रयेण
प्राची हरित् साधुमुखी प्रतीची ।
अस्तोन्मुखेन्दोः करधारणेन
तुल्यानुरागं वहतोऽत्र नूनं ॥ ४८ ॥

दिवाकरः फुल्लसरोजमध्ये
समानवर्णो मिषतो मरीचेः ।
पतन् नितान्तप्रणयाद्दिवात्र
निलीयमानो न पृथग् व्यलोकि ॥४९॥

मृदुसमीरचलोर्म्मिसुशोभिनि
मधुरपूतनिराविलवारिणि ।
जलचरः सरसीह सपङ्कजे
सदयितो विहगो ननु खेलति ॥ ५० ॥

क्षयिततिमिरभारो रक्तपूर्व्वप्रकाशो
विहगकलनिनादभ्रष्टनिस्तब्धभावः ।
विदलितकुसुमालिप्राप्तहासः समन्ता-
न्नवनवरुचिराभः शोभते काल एषः ॥ ५१ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
.रजनी नाम
चतुर्द्दशः सर्गः ।

( सिद्धवनावाप्तिः । )

अथ प्रसन्नं मधुरं सुखेन
प्रापुः शिवं सिद्धवनं पवित्रं ।
कूजद्विहङ्गावलिराजितानां
महीरुहाणां कुलमन्दिरं ते ॥ १ ॥

स्पर्शानुमेयैः सलिलैर्विहङ्गैः
पयस्विरैः पङ्कजसञ्चयैश्च ।
मनोज्ञया चारु सदा वहन्त्या
नद्या पुरो वीचिकरैर्विधौतं ॥ २ ॥

क्षेत्रे महाविस्तृतिसाधुवन्द्ये
नवीननीलप्रभशस्यपूर्णे ।
बुभुक्षितेनापि गवांगणेन
समीक्षितं पूर्ब्बमुखाननेन ॥ ३ ॥

प्रफुल्लराजीवविराजितेन
तरङ्गदोव्यत्पतगाकुलेन ।
सदाभिषिच्यं सरसा नितान्त-
स्वच्छाम्बुना तन्ननु दक्षिणाद्वि ॥ ४ ।

तदुत्तरस्यान्दिशि दृश्यमान-
विचित्रवर्णावलिशोभिताभिः ।
दूर्व्वाभिरालिङ्गितपृष्ठकेन
क्षेत्रेण दूरात् परिराजिताभं ॥ ५ ॥

सरोनदीक्षेत्रसुदृश्यचित्र-
सीमाल्पदूरे परिवर्त्तमानैः ।
मेघायमानैर्गिरिभिः समन्तात्
नीतं नवत्वं ननु रम्यताञ्च ॥ ६ ॥

स्रोतस्विनीपश्चिमतीरभागे
आकाशमानं परिमापयद्भिः ।
अश्वत्थसंघैर्निविड़ैरसंख्यैः
विचुम्बिताभ्रोभिरहो ! विभातं ॥ ७ ॥

वप्रायमाणैर्निविड़ैश्च देव-
दारुद्रुमैर्मर्द्दितमेघमालैः ।
दिशं प्रतीचीं सरसामुदीचीं
समाश्रयद्भिश्च समाश्रिताङ्गं ॥ ८ ॥

महाद्रिशृङ्गावसथं समुच्चैः
महीरुहं स्पर्द्धयितुं प्रवृत्तैः ।
सुरक्षितं दक्षिणभागमेव
समाश्रयद्भिः पिचुलैर्व्रहद्भिः ॥ ९ ॥

न्यग्रोध-पुन्नाग-पियाल-सालैः
भूर्जेङ्गुदी-मोचकपादपैश्च ।
व्यस्तैः समस्तैरपि साधुचित्रैः
क्वचित् क्वचिन्निर्म्मलशोभमानं ॥ १० ॥

पयोभरालस्यवदम्बुवाह-
प्रभानुलिप्तैस्तरुभिः समन्तात् ।
करञ्जकेन्द्रद्रुरसाल-साल-
राजादनैश्छादितमीक्षणीयं ॥ ११ ॥

श्मामाक्षपा-पुञ्जितमेघमाला-
विभावितानामितनित्यवाहैः ।
क्वचिद्विशालैस्तरुभिस्तमालैः
पुञ्जीकृतैश्चारुचिरं निगूढं ॥ १२ ॥

चन्द्राभ-पुष्पावलिशोभमानैः
पुञ्जीकृतात्यायतनीलवृक्षैः ।
क्वचिद्दिवाप्यत्र सताररात्रि-
भ्रमो बुधानामपि जन्यतेऽलं ॥ १३ ॥

अशोक-पीतद्रु-पलाश-भूर्ज-
सुतिन्तिड़ी-शार्दि-पीतशालाः ।
प्रवालपुष्पावलिभिर्महत्त्वं
स्थले स्थलेऽस्मिन् परिवर्द्धयन्ति ॥ १४ ॥

क्वचित् पलाशैः सह पिच्छिलाभिः
सुकोविदारैरपि यत्र तत्र ।
अस्मिञ्जयस्तम्भविभः समन्ता-
द्दालार्करक्तैः कुसुमैर्विभाति ॥ १५ ॥

नवप्रवालैरुपशोभमानाः
पदे पदेऽस्मिंस्तरवः कदम्बाः ।
नित्यानुरक्ता इव विश्वपातु-
र्भवन्ति पुष्पैर्ननु हृष्टकेशाः ॥ १६ ॥

आम्रातकः श्रीफलपादपश्च
रम्या वयस्था च विभीतकश्च ।
फलैर्नवीनैर्मिविड़ैर्दलैश्च
प्रतिस्थलं सुन्दरमाविभान्ति ॥ १७ ॥

निम्बाभयाहिज्जलपादपानां
सुशिंशपा-गन्धफलीततीनां ।
वालप्रवालैर्मधुरैः फलैश्च
क्वचित् क्वचिच्चारु विराज्यतेऽस्मिन् ॥ १८ ॥

खर्जूरवृक्षावलिरत्र ताली-
हिन्तालसंघाश्च नु यत्र तत्र ।
फलैरनन्तैः परिवर्त्तमानाः
दिगीश्वरायेव विभान्ति नित्यं ॥ १९ ॥

रम्भातरुश्रेणय ईक्षणीयाः
क्वचित् फलिन्यः शतशोऽफलिन्यः ।
क्वचित् सुदीर्घव्यजनायमानैः
पत्रैः स्वतः किं न सुवीजयन्ति ? ॥ २० ॥

के नारिकेलास्तरवः समन्तात्
फलातिभारानमितोर्द्ध्वशीर्षाः ।
इह स्थले क्वेव नितान्तनील-
पत्रा न केभ्यो मधुरं स्वदन्ते ? ॥ २१ ॥

लोध्रद्रुमाः सुन्दरकेशराश्च
नक्षत्रराशीरिव पुष्पराशीः ।
इहोत्सृजन्तः सततं समन्ता-
दिन्द्रद्रुवृक्षेण समं विभान्ति ॥ २२ ॥

कर्कन्धनद्धाः इह चन्द्रवालाः
सूक्ष्मैलया सार्द्धमलं समन्तात् ।
फलप्रसूनावलिसौरभेण
प्रतिस्थलं मानसमाहरन्ति ॥ २३ ॥

समीक्ष्य शान्तिप्रदमेतदेव
मुहुर्मुहुर्मोदभरात्तचित्ताः ।
मुदा ब्रुवन्ति स्म परस्परं त-
न्न पूर्णतृप्तिं लभते ह्यनुक्ता ॥ २४ ॥

अहो ! सुविन्यासविशेषशोभा-
स्तमाल-हिन्ताल-रसाल-तालाः।
प्रफुल्लपुष्पप्रचुराः समन्तात्
किमप्यलं भान्ति नितान्तरम्याः ॥ २५ ॥

एलालतावेष्टितनारिकेल-
कलाप एषः प्रचुरः पुरस्तात्।
पाषाणभेदोत्थितमञ्जरीव
हर्त्तुं मनो नो विरतिं लभेत ॥ २६ ॥

आमूलतः पुष्पितमाधवीयं
रसालकण्ठे रमते नितान्तं।
ताम्बूलवल्लीयमहो ! गुवाक-
तरौ कथं राजति पश्य पश्य ॥ २७ ॥

सुपुष्पितः पल्लवितश्च रक्तः
आमूलतोऽशोकमहीरुहोऽयं।
अहो ! नवस्फाटिकवेदिमध्ये
मूर्त्तो न किं नित्यनवानुरागः ? ॥ २८ ॥

अहो ! किमेतत् परिमाणहीनं
सयत्नमप्यत्र यदीक्षमाणः।
न प्रान्तभागग्रहणे समर्थो
दृष्टं पुरः केवलमेव चित्रं। २९ ॥

प्रफुल्लपुष्पावलिभाति-पीत-
तमोलतामन्दिरमत्रचारु ।
पिकालि-भृङ्गालि-विलापपूर्णं
सहस्रसंख्यं सरसस्तटेऽस्ति ॥ ३० ॥

आमूलदेशात् फलितः पुरस्तात्
श्रियाभियुक्तः पनसौघ एषः
अभ्यागतौत्सुक्यनिरासहेतो
न नम्यते किं न पदे पदेऽत्र ? ॥ ३१ ॥

धीरानिलान्दोलितसच्छिखाभिः
सुपुष्पिताभिर्नवपल्लवाभिः ।
कृतोपकारा प्रकृतिः किमत्र
वीरुद्भिरानम्यत एव भूयः ॥ ३२ ।

नवप्रवाले सहकारसंघे
पिकप्रमोदावलिविभ्रमनीह ।
सुपक्वरक्तः फलसार्थ एष
नाभ्यागताय स्वदते किमत्र ? ॥ ३३ ॥

दाडिम्ववृक्षाः सततं समन्तात्
फलैरनेकै रसराशिपूर्णैः ।
विचित्रराजेत्र प्रकृतेः किमत्र
नोत्पादयन्त्यात्र नवां पिपासां ? ।३४।

विलोक्यतेऽस्मिन् नवमल्लिकानां
सुपुष्पितं काननमीक्षणीयं ।
कुन्दाटवी विश्वनियन्तृ हास्य-
प्रभप्रसूनावलिभिर्विभाता ॥ ३५ ॥

तटे तटेऽस्मिन् सरसां मनोज्ञे
सिन्दूरवर्णायनमण्डलान्तः ।
स्मिताभपुष्पावलिशोभितोऽयं
सुमल्लिकावृक्षचयश्चकास्ति ॥ ३६ ॥

असंख्यपुष्पप्रभया विधौत-
स्त्रिकोणवर्त्मान्तरवर्त्तमानः ।
किं मागधीपादप एष नूनं
आम्यत्यहो ! सौरभदानकार्य्ये ? ॥ ३७ ॥

शिरीषशाखी सततं समन्तात्
पतत्रिसार्थं न निषेधतीह ।
किं षट्पदत्रस्तपदप्रहार-
सहासमर्थामितपुष्पकर्म्मैः ? ॥ ३८ ॥

पदे पदे दीपशिखाविडम्बि-
प्रत्यग्रपुष्पावलिशोभमाना ।
भूषत्यलं चम्पकपादपालिः
सरःस्थलस्वच्छजलोपलेड्या ॥ ३९ ॥

न किं स्थलं पूजयतीव भक्त्या
शेफालिकाभूरुहसञ्चयोऽयं ।
निर्ब्बाधमिडा भृशमुत्सृजन् सन्
स्वक्रोड़तोऽस्मिन् कुसुमानि तानि ? ॥ ४० ॥

क्वचिद्बकानां ननु केतकीनां
क्वचित् क्वचित् सुन्दरमालतीनां ।
क्वचित् तथास्मिन् करवीरकाणां
पुष्पैरुपेतानि वनानि भान्ति ॥ ४१ ॥

बन्धूकशोभाः रुचिरौड्रपुष्प-
काशोऽर्कतेजःप्रतिहासभासः ।
त्वक्सारनीलप्रतिभा गुवाक्-
श्रियो विराजन्ति पदे पदेऽत्र ॥ ४२ ॥

आलोललोध्रप्रसवप्रवालैः
समुल्लसच्चूतपरागजालैः ।
सुकेतकीपुष्परजःकदम्बैः
विभाति नो किं स्थलमत्र नित्यं ? ॥ ४३ ॥

अलक्तकालोहितपल्लवानां
प्रफुल्लतीरस्थकुशेशयानां ।
व्यात्ताननावस्थितचम्पकानां
विभाः पिबन्ति क्वचिदत्र भृङ्गाः ॥ ४४ ॥

विहङ्गपक्षव्यजनोत्थधीर-
तरङ्गमालं विकसत्सरोजं ।
सुस्वादुनीरं मधुरं गभीरं
क्रौञ्चालिहंसाकुलितं सरोऽत्र ॥ ४५ ॥

वसुन्धरास्फाटिकवेश्मकल्पं
त्रैलोक्यलक्ष्मीमणिदर्पणाभं ।
स्पर्शानुमेयातिपवित्रनीरं
सहस्रसंख्यं रमते सरोऽत्र ॥ ४६ ॥

स्थानप्रभावादृतवो मिलित्वा
वास्तव्यमित्रत्वमवापुरत्र ।
सर्व्वर्त्तुचिह्नानि न चेत् किमत्र
तिष्ठन्ति दृष्टेर्युगपत् पदव्यां ? ॥ ४७ ॥

समीरधीराहितवल्लिपुष्प-
पतत्परागैः पुलिनायमानं ।
क्वचित् क्वचित् कोकिलभिन्नचूत-
रसोच्चयैर्दुर्द्दिनवत् सदैदं ॥ ४८ ॥

इदं क्वचिच्चारुतरं सुवर्ण-
द्वीपायते चम्पकपुष्पजातैः ।
नीलायते सुन्दरपुष्पराजि-
पतद्द्विरेफावलिभिः क्वचिच्च ॥ ४९ ॥

अशोकपुष्पैर्मधुरैः पलाशै-
र्बालार्कभासिक्तनवप्रवालैः ।
दृष्टं क्वचित् काननमन्तर्हीनं
रक्तायमानं शयनं प्रकृत्याः ॥ ५० ॥

नभस्वदान्दोलितविप्रकीर्ण-
चूतारविन्दप्रचयप्रमोदैः ।
नवीनपीयूषनिदानचारु-
स्थलायते किञ्चन किन्न नित्यं ? । ५१ ॥

पदे पदे सुन्दरपादपानां
पङ्क्त्या नवाविशविशेषवत्या ।
प्रवालहस्तार्पितचारुपुष्पा-
ञ्जलिप्रभावैरिदमर्च्यते किं ? । ५२ ।

धीरः समीरः कुसुमप्रमोद-
कषायितश्चन्दनकाननोत्थः ।
मृदूर्मिषिक्तः सततं समन्ता-
दुद्यानमेतत् समुपास्त एव ॥ ५३ ॥

न किं स्थलं षट्पदगीतिरम्यं ?
न किं स्थलं कोकिलकाकलीतं ?
न किं स्थलं वल्लिनिकेतयुक्तं ?
न किं स्थलं मञ्जुलकुञ्जशोभि ? ॥५४॥

गजा मृगेन्द्रैः फणिनो मयूरै-
र्व्याघ्रैर्वराहा उरगैश्च भेकाः।
सखित्वमस्मिन् परमं गृहीत्वा
निरन्तरं चारु सुखञ्चरन्ति ॥ ५५ ॥

छायाद्रुमाणां तलदेशकेऽस्मिन्
यूथैः समं दीव्यति कृष्णसारः।
अहो! चमर्य्यश्चमरं प्रसार्य्य
चरन्ति नित्यं ननु यत्र तत्र ॥ ५६ ॥

अहो! पुरः पश्य शृगालसंघः
इतस्ततः पश्यति साधु कौतुक्।
उल्लम्फनैर्वृक्षत एव वृक्षा-
न्तरे समन्तात् कपयः पतन्ति ॥ ५७ ॥

पारावताः खञ्जनचातकाश्च
तरौ कदाचिद्भुवि वा कदाचित्।
अश्रान्तचित्ताः सततं विहृत्य
प्रमोदजातं परमं लभन्ते ॥ ५८ ॥

चित्रं कलं पञ्चममेव गायन्
पिकोऽस्य जीवितमलं किमाह ?
श्रोत्राभुग्रपेयैर्वचनैः ममाय
शुकः किमामन्त्रयते नु पान्थान् ? ॥ ५९॥

काका वकाः श्रान्तिमिताश्च चिल्लाः
हृष्यन्ति शाखासु तरोर्वसन्तः ।
कुलायसंस्थाः पृथुकाः समन्तात्
पश्यन्ति सर्ब्बं वदनं प्रसार्य्य ॥ ६० ॥

अहो ! सरांस्यत्र सरोजनेत्रै-
र्निरन्तरं स्वोरसि दीव्यतस्तान् ।
पश्यन्ति चक्राङ्ग-रथाङ्गधार्त्त-
राष्ट्रान् प्रियाभिः सह सारसांश्च ॥ ६१ ॥

पदे पदे नृत्यति नीलकण्ठो
महीरुहाग्रे स्फुटचारुकेकं ।
मधुव्रतो मञ्जुलगुञ्जनेन
नोत्साहयत्येव मुहुर्मुहुः किं ? ॥ ६२ ॥

पत्रेषु पत्रेषु विराजितायां
पुष्पावलौ चारु सदा लुठत्सु ।
हिमेषु साधु प्रतिविम्बपातः
कलानिधेरद्भुतमत्र भाति ॥ ६३ ॥

अङ्के समीरः कुसुमावलीनां
धीरं पतन् नीरवमाविचुम्ब्य ।
नवोपहारं ननु सौरभं तत्
गृह्णन् समन्ताद्भ्रमतीह नित्यं ॥ ६४ ॥

क्वचिद्द्विरेफस्य सवेगपातः
प्रकम्पयत्यत्र शिरीषपुष्पं।
अलिः क्वचित् पुष्पपरागयुक्तः
पीतप्रभो लक्ष्यत एव किं न ? ॥ ६५ ॥

फुत्कारजातैः सुमनांसि धीरं
विकाशयन्त्यत्र मुदा द्विरेफाः।
क्वचित् क्वचित् तानि भृशं किरन्ति
स्वयं विदल्य श्वसनं सुगन्धं ॥ ६६ ॥

आमूलतः फलितपुष्पितवीरुधीड्ये
तस्मिन् सरोविहगपादपराजिते तां।
वल्लीविभूषितगृहे ननु ते सुखेन
निन्युर्निशां चयमलं चिरतत्कथाभिः ॥ ६७ ॥

सा वासना चिरचिता वलवद्दुभुक्षा
क्वापि स्वतो विलयमत्र भजत्यकस्मात्।
स्वर्गापवर्गजनिता रुचिरा प्रशान्ति-
रस्मिन्नुदेति सहसा स्वयमीहयेन ॥ ६८ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
सिद्धवनावाप्तिर्नाम
पञ्चदशः सर्गः।

( भूलोकदर्शनं । )

अथ पाण्डुसुतावलेर्महा-
गतिमाकर्ण्य समीक्षितुं दिवि ।
प्रियया सममेकदा मुदा
ननु गन्धर्व इहागतः सुखं ॥ १ ॥

वसुधामभिवीक्ष्य सादरं
दयितां स्वां दयितः स कौतुकात् ।
असकृत् समदर्शयत् सुखं
रमणीयलमनेकशस्तदा ॥ २ ॥

दयिते ! धरणीं सुदूरतः
क्षणमीक्षस्व नु ! वर्त्तुलाकृतिं ।
तमसार्द्धमिहावृतं सदा-
परमर्द्धं मिहिरातिभासुरं ॥ ३ ॥

नलिनीदयितोज्ज्वलश्रिया
परिकीर्णा सरसा रसा भृशं !
नभसीह मुहुः क्षणे क्षणे
कथमावर्त्तत एव पश्य तत् ॥ ४ ॥

विपिनैर्नगरोपकाननैः
गिरिभिर्गुल्मलतापयोधिभिः।
धरणी नवचित्रवस्त्रवत्
त्रिदिवात् साधु सुखं विलोक्यते ॥ ५ ॥

किमु सन्निधितः क्रिलावयो-
स्तृणगुच्छैर्विपिनत्वमीयते।
जलविन्दुरहो! पयोधितां
गिरितामश्मलवोऽपि गच्छति? ॥ ६ ॥

अनुरूपविलोकितं त्विदं
नगरं प्रेयसि! शीघ्रमीक्ष्यतां।
बहुसौधविचित्रपादप-
वन-वापी-खग-मानवाकुलं ॥ ७ ॥

करिकुम्भनिभस्तनि! क्षणं
निपुणं पश्य मुहुर्हिमालयं।
निविड़ाम्बुदपङ्क्तिमुन्नतां
परिभिन्दन् वहते शिरांस्ययं ॥ ८ ॥

ममता-मद-मोह-वासना-
सुख-दुःखावलि-नित्यवञ्चितं।
यमिनं सुसमाधिनिश्चलं
किमु नान्वेत्ययमुत्सवप्रिये! ॥ ९ ॥

विशदं तुहिनं स्तरे स्तरे
प्रतिशृङ्गं रुचिरे हिमालये ।
परिवीक्ष्य लभस्व कौतुकं
स्थिरदृष्टेऽपि नवीनदर्शने ! ॥ १० ॥

इह सिन्धुरहो ! इरावती
ननु गङ्गा शरदिन्दुनिर्म्मला ।
द्रुतकाञ्चनभाविडम्बिनि !
वहति चामरवं निरन्तरं ॥ ११ ॥

बहुशृङ्गविशालविग्रहो
हिमगौरो गिरिरेष सुन्दरः ।
शिर उन्नयतीचितुं सुखं
किमु कैलासशिलोच्चयं मुदा ? ॥ १२ ॥

शिखरादध एव नीरदो
नवरत्नप्रभवत्वमस्य तत् ।
दिगधीशचिराश्रिताश्रयो
घटतेऽस्मिन् शतशः पदे पदे ॥ १३ ॥

द्विजराजमुखि ! प्रिये ! पुरो
ननु गौरीविपिनं समीक्ष्यतां ।
मुनिदुष्करमाचरत्तपः
इह गौरी शिवलब्धये चिरं ॥ १४ ॥

दयिते ! निपुणं विलोक्यतां
रुचिरोऽयं नु ! सुमेरुपर्व्वतः ।
अपवित्रजनेक्षणादहि-
रयमाभूषयति त्रिलावृतं ॥ १५ ॥

भ्रमणामलवेशशोभिना
मिहिरेणायमहो ! निरन्तरं ।
परिवेशसुशोभिदीपवत्
प्रियवक्त्रे ! परिदीप्यते स्फुटं ॥ १६ ॥

ननु चैत्ररथोत्तराटवी-
प्रियलक्ष्मीरयमेव योगिनां ।
त्रिदिवाधिनिवासिनामपि
चिरशान्तिप्रणयेक्षणाक्षमः ॥ १७ ॥

नवशेखरराजिभूषित-
इह कैलासगिरिर्विलोक्यतां ।
सदिगन्तदिदृक्षयेव किं
विदधातुन्नतमुत्सवं शिरः ॥ १८ ॥

अयमुत्सुकि ! नीललोहित-
चिरविश्रान्तिविचित्रमन्दिरं ।
अतिपुण्यवतां प्रतिक्षणं
जनयत्युत्सवमुत्सवप्रिये ! ॥ १९ ॥

विमदाम्बुजचारुसुन्दरे
विधुविम्बे प्रतिविम्बिते चिरं ।
इह या प्रतिभाति दृश्यता
रुचिरे सा वचनातिदुर्लभा ॥ २० ॥

अलकां नगरीमिह स्थितां
परिपश्यन्त्यमलां मुहुर्मुहुः ।
मणिमण्डपरत्नभूषितां
निजदृग्जन्म विधेहि सार्थकं ॥ २१ ॥

अद एव नितान्तसुन्दर-
मिह मन्दोदकनामकं सरः
नवहेमपयोजरञ्जितं
चणमीक्षस्व नु ! वालिकाकुलं ॥ २२ ॥

अयमुज्ज्वलसुन्दरानने !
ननु विष्कम्भगिरिर्विलोक्यतां ।
तटिनी घटते यदाख्यया
मृदुजाम्वूफलराजिरस्ति सा ॥ २३ ॥

द्रुतहेममयप्रभः शशि-
मुखि ! हेमाद्रिक एष पर्व्वतः ।
रुचिराप्सरसां निकेतनं
खलु कूटान्तिम एव वीक्ष्यतां ॥ २४ ॥

मलयोऽम्बुजसन्निभानने !
निलयोऽसौ हरिचन्दनस्य नु !
मृदु यन्नवपल्लवं सुख-
मवतंसीकृतमेव सागरैः ॥ २५ ॥

घनपीनसमुन्नतस्तनि !
पवनोऽस्यैव नितान्तधीरगः ।
अविकारिमनस्यपि क्षणा-
ज्जनयत्येव विकारितां बलात् ॥ २६ ॥

पृथिवीगतपूर्व्वसीमक-
दृढरेखेव नु ! सह्यपर्व्वतः ।
अमृतांशुविभानिभानने !
पुरतो भाति सुखेन दृश्यतां ॥ २७ ॥

गिरिरेष महाप्रमाणक-
स्तरुवल्लीगहनः प्रियोत्तमे !
खरवीचिकुलैः पयोधिना
नवपादे सततं नु ! सेव्यते ॥ २८ ॥

ननु देवगिरिर्विलोक्यतां
प्रमदानां परमाकरो ध्रुवं ।
तरुपल्लवपुष्पराजिषु
प्रणयस्थापनलम्पिमाजुषां ॥ २८ ॥

सरसं सरसि ! प्रियेऽम्बुधिं
मणिमुक्ताचयमूर्म्मिपाणिभिः ।
सुकिरन्तमलं समन्ततः
सततं वीच्य लभस्व तर्पणं ॥ ३० ॥

इममेव सुमथ्य निर्जराः
दृढ़सारेण नु ! मन्दराद्रिणा ।
कमलाममृतं तरुं हय-
मलभन्त प्रणयप्रसारिणि ! ॥ ३१ ॥

इममेव समाश्रयन् सुखं
ननु मैनाकगिरिः पुरन्दरात् ।
परिशङ्कित एष भेदकात्
लभते स्मेव नवीनजीवनं ॥ ३२ ॥

परिलोकय तीरमेदिनीं
मम कण्ठाश्रितवाहुवल्लरि !
जलजन्तुविकीर्णशुक्तिभि-
र्मणिमुक्ताप्रकरैश्च राजितां ॥ ३३ ॥

नवनीरदभातितस्करं
नववेलाविपिनं महोदधेः ।
परिपश्य नितान्ततर्पणि !
नववेश्मेव विधातुरुज्ज्वलं ॥ ३४ ॥

वदनं प्रतिबिम्बितं यस्य ते
स इतोऽजायत सर्व्वरीश्वरः ।
हरिरत्र युगत्रये चिरं
शयनं गच्छति मञ्जुभाषिणि ! ॥ ३५ ॥

हृदयेश्वरि ! पश्य दक्षिणे
ननु लङ्कां द्रुतहेमनिर्म्मितां ।
इह काम्यमशोककाननं
मिथिलाराजसुताश्रुकारणं ॥ ३६ ॥

जलधौ नवसेतुरीक्ष्यतां
तनुमद्राघवसम्भवं यशः ।
प्रियवादिनि ! पश्य सुन्दर-
मिह रामेश्वरसंज्ञकं शिवं ॥ ३७ ॥

अवलोकय देववाञ्छितं
हरितीर्थं नवकुञ्जमञ्जुलं ।
इह दक्षिणवाहिनी शुभा
मृदुगङ्गा रजतप्रभार्च्चिता ॥ ३८ ॥

खरवीरपदे सिताम्बुज-
स्त्रगिवास्मिन् हिमगोत्रमूलके ।
लघुवारिमृदूर्म्मिवाहिनी
तटिनी दीप्यत एव निर्म्मला ॥ ३९ ॥

युवतिः कृशविग्रहेव सा
पतिमाप्तं प्रति सागरं प्रिये !
सततं कलनादिनी शिवा
मृदुगङ्गा सरसीह धावति ॥ ४० ॥

मधुरामितभातिभातयो-
रिह तस्यास्तटयोर्विभान्त्यलं ।
नवनीरदसुन्दरप्रभाः
तरवः कुञ्जवनानि वीरुधः ॥ ४१ ॥

विपिने विपिने विहङ्गमाः
विशदश्वेतसुनीललोहिताः ।
करुणं मधुरञ्च सन्ततं
विरुवन्तोऽत्र हरन्ति मानसं । ४२ ॥

इह केचन फेणिलाः क्वचि-
दुपलाः केचन पूर्णमञ्जिताः ।
क्वचनागलमञ्जिता भृशं
ननु केचिज्जनयन्ति कौतुकं ॥ ४३ ॥

अयि सुन्दरि ! विन्ध्यपर्व्वते
गुरुपादप्रणतानतानने ।
विमलामरवारिशोभिनी
कलनादा वहतीव नर्म्मदा ॥ ४४ ॥

यमुनापुलिने चिरस्थिरा
मथुरा कस्य नु ! चेतसि स्फुटं ।
वसुदेवसुदुःखसन्ततिं
समुपस्थापयितुं निवर्त्तते ? ॥ ४५ ॥

क्षणमुत्पलचञ्चलेक्षणे !
ननु वृन्दावनमेतदीक्ष्यतां ।
परमेश्वरपादपङ्कजा-
पणदूराहतविघ्नजालकं ॥ ४६ ॥

स्मरसि क्षणमप्यनिन्दिते !
हरिलीलाञ्चितकाननावलिं ।
किमु ? यत्र च गोपबालिका-
रससाराम्बुधिवीचयोऽभवन् ॥ ४७ ॥

क्व गतं खलु गोपिकावचः
प्रणयोक्त्यासविवर्द्धितोत्सवं ?
क्व गतं सह गोपबालकै-
र्मधुरं देवनमाश्वलौकिकं ? । ४८ ॥

क्व कदम्बतरुः स वस्त्रभाक् ?
क्व नु ! दौत्यं खलु गोपिकाततेः ?
क्व विलासिनिकुञ्जकाननं
क्व विलासः शुकशारिकाभवः ? ॥ ४९ ॥

क्व हरेभ्रमणं यथा तथा ?
क्व यशोदामधुरेक्षणं मुहुः ?
क्व महीरुहसाधुभञ्जनं ?
क्व नु ! गोवर्द्धनधारणं मुदा ? ॥ ५० ॥

सरयूपुलिने विराजिते-
यमयोध्या दयिते समीच्यतां ।
अयि ! दाशरथाङ्घ्रिपङ्कज-
रजसा जायत मुक्तिदायिनी ॥ ५१ ॥

हृदये समुदेति स क्षणः
किमु ? यस्मिन्निह सुन्दरप्रभे !
तनयैः सममुत्सुकैर्दश-
रथसम्राट् कुशली चिरं बभौ ॥ ५२ ॥

प्रियदे ! किमिदं निवेदितु-
मयि ! शक्यं ननु जीवितेश्वरि !
इह भारतभाग्यभास्करः
पुनरावृत्तिनिवृत्तये गतः ॥ ५३ ॥

करुणे क्षणमीच्यतां प्रिये !
नु ! कुरुक्षेत्रमिदं पुरोगतं ।
इह कौरवपाण्डवोद्भव-
समराग्नौ जुहुवुर्भटास्तनूः ॥ ५४ ॥

अभिमन्यु मिहैव सप्तभिः
रथिभिः साधु निपात्य मिश्रितैः ।
अयि ! वीरमुखेषु कज्जल-
स्थिरभागो नितरामलेप्यत ॥ ५५ ॥

हृदये किमुदेति ते स्फुटं
दिवसं प्रेयसि ! तद् युधिष्ठिरः ।
छलवञ्चनवाक्ययोजनै-
र्गुरुहृच्चयसाधको यदा ॥ ५६ ॥

इह शान्तनुनन्दनो लयं
प्रियसत्यव्रतदीक्षितो गतः ।
निमिमील चिराय चक्षुषी
दयिते ! द्रोण इहैव हा वत ! ॥ ५७ ॥

क्व गताः शकुनेः कुमन्त्रणाः !
क्व नु ! दुर्योधनदुष्टवुद्धयः !
क्व च कर्णजिगीषुता परा !
क्व च दुःशासनकर्कशाः क्रियाः ! ॥ ५८ ॥

क्व करालकृपाणघर्षणं !
क्व धनुर्बाणनिपातजोऽनलः !
क्व नु ! वा भटसिंहनिस्वनः !
क्व मदस्फूर्त्तिजवाक्यवर्षणं ! ॥ ५९ ॥

इह भीषणविशालविग्रह-
जलधिस्रोतसि तीव्रवेगके ।
पतितः शपथो हरेश्चिरं
वचनातीतधरान्तसंगतः ॥ ६० ॥

यदिदं परमोत्सवाश्रय-
परमानन्दनिकेतनं स्थितं ।
अधुना तदिदं चिरं शव-
शयनस्थानमिव प्रदृश्यते ॥ ६१ ॥

अहह ! क्षणमीच्यतां स्फुटं
पुरतो द्वारकयाभिवृत्यते ।
विमलाम्बुधितारवीचिभिः
सततग्रस्तभुवा मृगीक्षणे ! ॥ ६२ ॥

मम चक्षुषि पूर्व्वदृश्यता
रमणीयाप्यधुना प्रभासते ।
अनवापि नवेव भूतले
इयमासीत् स्थिरचञ्चलाविभे ! ॥ ६३ ॥

त्रिदिवः प्रबभूव भूतले
ननु येयं समयप्रभावतः ।
अयि ! कृष्णविनाकृता सती
निममज्जाम्बुधिजीवनोरसि ॥ ६४ ॥

अयनं सरसी निकेतनं
विपिनं कृत्रिममत्र केतनं।
पशु-पक्षि-पतङ्ग-भृङ्गकाः
नववत् सर्व्वमहो! स्म राजते॥ ६५॥

अयि! नन्दनकाननं श्रिया
रमणीयोन्नतिभिर्हिमालयं।
अमरां प्रजिगाय भूतिभि-
रधुना संस्मरणीयमास्ति सा!!!॥ ६६॥

एष प्रयागोऽस्य नवोपकण्ठे
सरस्वतीयं यमुना च गङ्गा।
परस्परास्श्लेषजुषो भगिन्यो
यथा प्रयान्त्येकपथेन साधु॥ ६७॥

वारानसीयं भवनं शिवस्य
नितान्तरम्यं निपुणं निरीक्ष्य।
दृग्जन्मनः सार्थकतां लभस्व
पारत्रिकीं शान्तिमपि क्षणेन॥ ६८॥

असौ प्रभासः स्मरणीय एव,
वसुन्धराभार दृहापि लिल्ये।
परस्परं साग्रहमेरकाभि-
र्हता विरुध्येह नु! यादवा हा!॥६९॥

समीक्ष्यतामेष नु ! चित्रकूटो
भयङ्करप्रान्तरदण्डकेयं ।
गोदावरीसेवितराजितोराः
विम्बाधरि ! प्रस्रवणाचलोऽयं ॥ ७० ॥

इरावती जह्नुसुता शतद्रुः
कृष्णा च सिन्धुर्ननु चन्द्रभागा ।
गोदावरी च प्रवहन्ति कीदृक्
नीलोत्पलाक्षि ! स्फुटमत्र पश्य ॥ ७१ ॥

नीलाचलोऽयं मधुरो महेन्द्रः
प्राग्ज्योतिषोऽयं मधुराननाक्षि !
कलिङ्ग-सौराष्ट्र-विराट-पाण्ड्याः
देशा इमे दर्शनवर्त्मनि स्युः ॥ ७२ ॥

अमृतकिरणवक्त्रे ! दृश्यतामुत्तराक्षि
सममनुजकदारैर्धर्म्मपुत्रः प्रयाति ।
मधुरमधुरमन्यद्दर्शनीयं विहाय
निपुणमसकृदेतद्दृश्यमालोकयावः ॥ ७३ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
भूलोकदर्शनं नाम
षोड़शः सर्गः ।

( वर्त्म माधुर्य्यानुभवः । )

अथ भास्वति पूर्व्वपर्व्वते
उदिते सानुचरो युधिष्ठिर ।
परमेशमलं विचिन्तयन्
निधिपद्माधिपदिङ्मुखे ययौ ॥ १ ॥

गिरिवारिगणाङ्कितकर्द्दम-
विषमार्द्रीकृतपिच्छिलां क्वचित ।
पदवीं विषमोपलाङ्कितां
क्रमशः प्राप्य जगाम सन्ततं ॥ २ ॥

उपरि प्रसरत्तरुच्छद-
विनिकृत्तातपविक्रमेण ते ।
विरलोपलकेन वर्त्मना
तृणहीनेन बभूवुरुत्सुकाः ॥ ३ ॥

वनहस्तिनितान्तमर्द्दित-
नलिनीनालसमावृता क्वचित् ।
उपलोद्गतचारुमञ्जरी-
जटिला सा पदवी मनोहरी ॥ ४ ॥

अयनं प्रगलत्सुगुग्गुल-
सततार्द्रीकृतमुत्सुकं मनः।
क्वचनाभ्यहरच्छिलाजतु-
रसधाराभरपिच्छिलोपलं ॥ ५ ॥

गिरिजन्तुशफाईनोत्थित-
हरितालोच्चयरेणुपांशुले।
कनकोपलधूलिरञ्जिते
पथि ते शान्तिमहो! परां ययुः ॥ ६ ॥

नवकस्तुरिकामृगाश्रितः
प्रवयोरङ्कुसुरोमवर्द्धितः।
प्रियगन्धशिलाचयप्लुतो
गिरिमार्गः कुतुकाकरोऽभवत् ॥ ७ ॥

घनवेत्रलताकुलाकुला
कुसुमामोदिरजःकषायिता।
क्वचिदम्बुसुषिक्तमारुत-
प्रणयाढ्या पदवी सुखाजनि ॥ ८ ॥

अतिसन्निहिताम्बुजोच्चय-
मधुरामोदकषायिविग्रहः।
कलहंसनिनादनादितः
क्वचिदेषामभवद्गिरिव्रजः ॥ ९ ॥

पथि साधु समन्ततः सुखैः
सुषमाशोभितवस्तुसङ्करैः ।
इह धर्म्मसुतः सुविस्मितो
हृदयं संलघु कर्त्तुमब्रवीत् ॥ १० ॥

प्रकृतेर्नवराज्यवीक्षणै-
र्नयनं सार्थकजन्मतां गतं ।
किमहो ! रमणीयताम्बुधे-
रमन्तीरमवाप्नुमो वयं ? ॥ ११ ॥

बहुशः श्रुतिमागता भृशं
युवहारीतरुतिर्मनोहरी ।
ननु किन्तु कदापि तत्र कि-
मनुभूतं मधुरत्वमीदृशं ? ॥ १२ ॥

भ्रमरः सुरसालकुट्मल-
चयभेदोद्यत उत्सवप्रियः ।
असकृत् खलु वीक्षितोऽपि किं
समवालोकित ईदृशः क्वचित् ? ॥ १३ ॥

क्व न भाति पिकः ? क्व वा मुदा
सहकारं कवलीकरोति न ?
क्व नु ! वा कलगीतिविस्मृतिः ?
नववत् किन्त्विह राजते न किं ? ॥ १४ ॥

मधुमत्त-मधुव्रतव्रज-
मधुरध्याननिनादसञ्चयः ।
वचसो मनसः पथो बहि-
रयमापातयतीह कौतुकं ॥ १५ ॥

बहुवर्णविचित्रशोभिनो
बहवः सन्ति सदा पदे पदे ।
विहगाः कलगीतिवन्दिताः
मधुराः किन्तु भवन्ति नेदृशाः ॥ १६ ॥

मधुमोदिषडङ्घ्रिझङ्कृति-
मुखवाचालरसालपादपाः ।
रुचिरैर्मुकुलैः सुशोभिताः
क्व नवं कोकिलमाह्वयन्त्यलं ? ॥ १७ ॥

भयहीनचकोरचुम्बित-
सुमरीचाङ्कुरवर्णसंहतीः ।
विकिरन् सततं समन्ततो
मधुरं वाति मृदुः समीरणः ॥ १८ ॥

रमणीयतमाः परस्पर-
प्रणयक्रुड्डकपोतपङ्क्तयः ।
विकसत्कुसुमाभिपातनैः
स्थगयन्तीह धरां किमप्यहो ! ॥ १९ ॥

कुसुमप्रसरद्रजांस्यलं
समधूनि प्रबलः प्रभञ्जनः।
विकिरन् क्वचिदत्र दुर्द्दिन-
विषमाभां परिदर्शयत्यहो!॥ २०॥

इह पश्यत दक्षिणे क्षणां
तरवो मूलभुवि प्रमोदिनः।
कुसुमस्खलितैरजस्रयैः
शयनं किं रचयन्ति नु! श्रियाः?॥ २१॥

विकसन्नवकेतकीतति-
सुमनोरेणुभरस्मितावृता।
पदवी नवयौवनोच्चय-
विवशेव स्फुटमीक्ष्यते न किं?॥ २२॥

सरसी सरसीव सुस्फुटं
नलिनीकाननचारुदर्शनैः।
किमपीह हरन्त्यलं मनो
नयनञ्च प्रकटं सुशोभते॥ २३॥

कुसुमस्फुटरोमकण्टको
वकुलः शोकचयान्तकस्तरुः।
सरसाद्विभृतां मनस्विनां
प्रमुदापादनकर्म्मणि क्षमः॥ २४॥

विकसन्मुकुलस्य सौरभ-
प्रचुरामोदविसर्जनेऽलसाः ।
तरवः क इह प्रसन्नहृत्-
पथिकौघप्रणयैर्निराकृताः ? ॥ २५ ॥

नवमञ्जुलकुट्मलोच्चय-
नवशोभाविलसत्सुपल्लवाः ।
नयनानि हरन्त्यनारत-
मयनस्योभयपार्श्व पादपाः ॥ २६ ॥

निविड़ात् कुसुमात् समन्ततः
पतिताः पूतसुदृश्यपांशवः ।
अधिकाधिकशोभितामहो !
वनलक्ष्मीसुषमां प्रकुर्व्वते ॥ २७ ॥

मकरन्दमदैर्विड़म्बिता
भ्रमरी गुञ्जनतत्परा सती ।
लतया मृदुदोलया शनै-
र्लभते दोलनमत्र सन्ततं ॥ २८ ॥

विलसल्लवलीप्रवालक-
परिलीना सरसीह कोकिला ।
किमपि प्रसभं मुहुर्मुहुः
मधुरं गायति पञ्चमाश्रितं ॥ २९ ॥

कुसुमात् कुसुमान्तरन्नहो !
मधुरं सौरभमत्र दक्षिणः ।
सततं सरसं समीरणो
वनदेवीं किमु सेवते चिरं ? ॥ ३० ॥

अहह ! प्रणयेन यत्नतः
कुसुमानीह सुखं प्रभञ्जनः ।
सुरभीणि निजाङ्कमण्डले
परिगृह्णन् सततं भ्रमत्यलं ॥ ३१ ॥

सुमनःपतनोद्भवो ध्वनि-
र्मधुरः श्रोत्रतड़ागगह्वरं ।
अमितैरमृतैर्निरन्तरं
पथिकानां परिपूरयत्यहो ! ॥ ३२ ॥

रुचिरैः प्रचुरैः पतत्रिण-
स्त्रिदिवोद्यानसुखोपहासिभिः ।
हरितो मधुरा निराविलाः
मुखरीकुर्व्वत एव कूजनैः ॥ ३३ ॥

प्रियदर्शनविस्मितान्तराः !
पुरतः पश्यत भूरुहोपरि ।
परमेशपरायणा इव
प्रणिमीलन्नयना विहङ्गमाः ॥ ३४ ॥

वसुधेन्द्रियमत्र सौरभैः
कुसुमं साध्वनुलिम्पतीव नु !
विहगो मधुरैः सुकूजनैः
श्रवणं पूरयतीव सन्ततं ॥ ३५ ॥

किमहो ! नु ! विहङ्गकाकली-
मुखरीभूतमपूर्व्वदर्शनं ।
निभृतं वचसामगोचरं
वनमानन्दमलं ददाति न ? ॥ ३६ ॥

नवपल्लवपुष्पशोभित-
विटपानां भुजभाग्यसंजुषां ।
इह रच्चितभूतले किमु
चिरमास्थातुमहो ! न होष्यते ? ॥ ३७ ॥

गिरिनिर्झरिणीतटं कल-
ध्वनिपूर्णं तरुराजिराजितं ।
चिरमत्र सुखं निषेवितुं
व्रततिश्यामलमिष्यते न किं ? ॥ ३८ ॥

जगतः परमार्हनोचितं
परमन्तीर्थमिदं विहाय किं ।
मनुजाश्चिरचारिदूषित-
स्थललाभाय नु ! यान्ति सर्व्वतः ? ॥ ३९ ॥

अमरोऽप्सरसश्च किन्नरी
ध्रुवमेतन्न लुलोकिरे स्थलं ।
अधुनापि नु ! नन्दनस्थिति-
व्यसनं हातुमहो ! क्षमा न यत् ॥ ४० ॥

विटपो सुमनोनता लता
तरुरूढ़ो विहगोऽमितश्चिरं ।
स्थिरतां न चिराय याति किं
वनलक्ष्मीनवभातिविस्मितः ? ॥ ४१ ॥

तरुकम्पनवीक्षणादहो !
वयमेवं चिरमास्म विस्मिताः ।
सुषमामृतपानपण्डित-
मनसां कैव दशास्य दर्शने ? ॥ ४२ ॥

हृदयाश्रितमर्म्मभेदक-
भवतापाभिहता मनस्विनः ।
स्थलमीदृशमाप्नुवन्त्यलं
चिरविश्रामसुखानुभूतये ॥ ४३ ॥

दूरमेव वसुन्धरातले
त्रिदिवाभाव-निराकृतिक्षमं ।
गुरुशोकमपि क्षणाज्जनान्
किमु विस्मारयितुं सहेत न ? ॥ ४४ ॥

सुषमां नवमूर्त्तिशोभिनीं
मधुरां वीच्य नु ! जीवितामिह ।
अधुना चिरजातचक्षुषोः
सफलत्वं ननु मन्यते न किं ? ॥ ४५ ॥

अथोत्तराशामभिवीक्ष्य सत्वरं
प्रहृष्टरोमा नृमणिर्युधिष्ठिरः ।
निपत्य भूमौ गललग्नवल्कलो
ननाम सानन्दमना मुहुर्मुहुः ॥ ४६ ॥

नितान्तजिज्ञासुनिजानुवर्त्तिनः
समब्रवीद् भक्तिपवित्रमानसः ।
अजातशत्रुः स सुरालिसंश्रयं
प्रियाः ! सुमेरुं नमताशु भक्तितः ॥ ४७ ॥

अहो ! सुमेरोः सुरसद्मनो गिरेः
समन्तिके देशविशेष उन्नते ।
वयं सुवर्त्तामह एव सुव्रताः !
नितान्तसौभाग्यविशेषशालिनः ॥ ४८ ॥

कुवेरदिग्वर्त्मनि लोचनं स्थिरं
किरन्तु पश्यन्तु सुमेरुमुन्नतं
अयं सुदुर्भाग्यजनस्य चक्षुषो
न गोचरत्वं लभते कथञ्चन ॥ ४९ ॥

गिरावमुष्मिं स्त्रिदिवेश्वराः प्रियाः !
पदे पदे सादरमाश्रयं स्वयं ।
वसन्ति निर्म्माय सुविस्मृतौ खलु
दिवोऽपि वार्त्तामपि पातयन्ति च ॥ ५० ॥

अधिकया कथयालमयं गिरिः
शुचितया सुरराजिलसत्तया ।
अमितरत्नसुशोभितयाप्यहो !
रुचिरभः प्रतिपच्चविवर्जितः ॥ ५१ ॥

सर्व्वे ततः परमभक्तित एव चित्रं
तं पर्व्वतं सपदि भूपतिताः प्रणम्य
एभिः पवित्रमधुरैर्वचनैः सुखेन
जग्मुः प्रफुल्लवदना रुचिरामुदीचीं ॥ ५२ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
वर्त्म माधुर्य्यानुभवो नाम
सप्तदशः सर्गः ।

(सहचर-विरहः ।)

ततः सदारः ससहोदरश्च
युधिष्ठिरः शुद्धदृढप्रतिज्ञः ।
वल्लीचयानां मृदुपुष्पितानां
पथा प्रतस्थे रुचिरामुदीचीं ॥ १ ॥

अग्रे सरास्ते क्रमशः सुखेन
सौन्दर्य्यराशिं हृदये निधाय ।
आसादयामासुरनल्पशोभं
तमर्णवं सस्तुति वालुकानां ॥ २ ॥

अल्पप्रचक्षूंषि कथञ्चनाशु
सन्तर्प्य ते दृश्यसमीक्षणेन ।
तल्लोचरीभिर्मधुराभिराभिः
कथाभिरेतं नितरामतीयुः ॥ ३ ॥

सुमेरुमुद्दिश्य ततः प्रवृत्ताः
शनैः शनैस्ते हरिपर्व्वतं तं ।
विचित्रदृश्योच्चयदर्शनीय-
मासाद्य सम्फुल्लहृदो बभूवुः ॥ ४ ॥

शनैस्तदास्या द्रुपदात्मजायाः
अङ्गानि दौर्बल्यमथाप्नुवन्ति।
चिरस्थिरा शान्तिरनल्पदुःखं
चिराय कस्यापि न वर्त्ततेऽत्र ॥ ५ ॥

हाहा! ततो दैववशात् सुवृत्ता
पतिव्रता पाण्डवधर्म्मपत्नी।
भीमादिनेत्रच्युतवारिवृष्ट्या
पपात सार्द्धं वसुधातलेऽस्मिन् ॥ ६ ॥

भीमादिवास्याकुलकण्ठमुक्तो
नितान्ततारार्त्तनिनादसार्थः।
तामस्पृशन्नप्यनवस्थितारि-
चक्षुः क्षणेनैव समाचकर्ष ॥ ७ ॥

पतिव्रताया भृशनिःसृतेन
शेषेण निश्वाससमीरणेन।
विकम्पितेनेव महीरुहेण
पुष्पाश्रुसंघो मुमुचे तदानीं ॥ ८ ॥

तदार्त्तनादेन सुदुःखितैस्तैः
विहङ्गमौघैरपि रुद्यते स्म।
शिलामयेनापि नगेन दुःखा-
दरण्यकृष्णांशुकमाप्यते स्म ॥ ९ ॥

हाहा ! तदार्त्तस्वरमर्द्दितोऽपि
युधिष्ठिरो ज्ञानविधौतचित्तः ।
पश्चान्मुखः सन् द्रुपदात्मजां ता-
मैक्षिष्ट वल्लीमिव भिन्नमूलां ॥ १० ॥

प्रियामुपेतेव नितान्ततृष्णा-
सुदीर्घनेत्रेण भृशं निपीय ।
केशाग्रतः पादतलान्तभागं
यावन्मुहुः सादरमाममर्ष ॥ ११ ॥

ततः प्रणिश्वासभरेण सार्द्धं
क्रमञ्च मौनञ्च विमुच्य किञ्चित् ।
प्रसन्नगम्भीरपवित्रवाचा
प्रचक्रमे वक्तुमहो ! शनैः सः ॥ १२ ॥

विहाय नः किं सुचिराय यासि ?
प्रिये ! यथेच्छं ननु याहि याहि ।
पापात्मनो ह्यस्य युधिष्ठिरस्य
संसर्गलेशोऽपि चिराशुभाय ॥ १३ ॥

नृपात्मजे ! हा ! त्रिदिवेश्वरीभि-
रपि प्रशस्यातिपवित्रवृत्ता ।
क्व लाढ्यशी ! क्वायमहो ! परेषां
छिद्रानुसन्धानविचारदक्षः ॥ १४ ॥

नृपात्मजापि क्षितिपालकस्य
वधूरपि त्वं नु ! युधिष्ठिरस्य ।
पापात्मनः सङ्गवशाच्चिराय
वने वने हा ! विचचार नो किं ? ॥ १५ ॥

पापात्मनां हा ! ननु पाण्डवाना-
मशेषतो दोषविशेषतस्त्वां ।
आधिः कदापि प्रमुमोच नैव
पस्पर्श नैव क्षणिकोऽपि मोदः ॥ १६ ॥

मुक्तः कदाप्येवमनेन सार्द्धं
पापात्मना पुण्यदृशा भवत्या ।
अमेरत नैव. क्षणमप्यनन्य-
साधारणक्षान्तिगुणैकमात्रा ॥ १७ ॥

अशेषसौभाग्यचयाश्रिता त्वं
यदद्य संसारसृतिग्मदृष्टेः ।
पश्यानमत्येषि कटोः कटाक्षात्
न साध्वसं क्वापि तव प्रिये ! स्यात् ॥ १८ ॥

निकृष्टदुःशासनदुष्टपाणि-
र्न कुन्तलं शक्ष्यति ते ग्रहीतुं ।
दुर्य्योधनस्यापि सुदुर्व्वचस्ते
प्रवेक्ष्यति श्रोत्रयुगे न नूनं ॥ १९ ॥

हा ! द्यूतगोष्ठीषु नितान्तदीना
विषादमूर्त्तिस्तव कष्टदृष्टिः ।
भीमार्ज्जुनौ दीपयितुं न दग्धुं
युधिष्ठिरं न प्रभविष्यतीह ॥ २० ॥

हा ! काम्यकारण्यविहारकष्टं
शिरीषसौभाग्यहरं शरीरं ।
भूयोऽप्यलं स्प्रष्टुमहो ! त्वदीयं
कदापि नैवेतरलोकपार्थ्ये ! ॥ २१ ॥

इन्द्रप्रसादार्थमहो ! विभत्सु-
र्व्रतानुरक्तश्चिरदूरवासी ।
न चञ्चलं ते हृदयं विधातुं
भवेत् समर्थो विरहव्यथाभिः ॥ २२ ॥

अज्ञातवेशेन विराटपुर्थ्यां
हा ! स्थास्यसि त्वं न कदापि भूयः ।
न किञ्चरीत्वं हृदये भवत्याः
प्रश्नं समुत्पादयितुं समीशं ॥ २३ ॥

हा हा ! कुरुक्षेत्रभुवि प्रणाशः
पुत्रस्य मित्रस्य सहोदरस्य ।
पितुर्गुरोश्च स्वजनस्य नूनं
दग्धुं न चित्तं तव शक्ष्यतीत्थं ॥ २४ ॥

पतिव्रतं साधु यथोपयुक्तं
सम्पाद्य भक्त्यैव पवित्रचित्ते !
उद्यापनं तस्य सुखं विधाय
प्रिये ! प्रियं स्थानमलं प्रयासि ॥ २५ ॥

पवित्रलोकाश्रमसाधुपान्थे !
प्रशान्तधीरस्थिरपूतचित्ते !
व्यर्थप्रलापैः समयं तवेमं
यतेऽत कर्त्तुं ननु दूषितं न ॥ २६ ॥

प्रिये प्रिये ! पुण्यचयातिपूते !
नामावशेषे ! द्रुतमालभस्व ।
तमच्चयं लोकमलं पवित्रं
यतस्तु नावर्त्तत एव भूयः ॥ २७ ॥

अनन्तपापप्रतिमूर्त्तिरेषः
युधिष्ठिरस्त्वां सुगृहीतनाम्नीं ।
स्पृशेत् पुनर्नेति वदन्नुदीचीं
स भ्रातृभिः सार्द्धमलं प्रतस्थे ॥ २८ ॥

भीमेन निर्बन्धपरेण पृष्टो
युधिष्ठिरः सादरमावभाषे ।
दोषः सदा फाल्गुनिपक्षपातः
प्रियां समाधिस्खलितां चकार ॥ २९ ॥

अथोत्तराशामभियातवत्सु
तेष्वेव पाण्डोस्तनयः कनिष्ठः ।
आसाद्य पुण्याश्रममेव योग-
च्युतः समाश्लिष्यति मेदिनीं स्म ॥ ३० ॥

तस्मिन् क्षणे तस्य महानिपात-
नादेन तेषु प्रतिवोधितेषु ।
भीमादयो हा ! रुरुदुः प्रसुप्त-
कण्ठं सुधीरस्तु युधिष्ठिरोऽभूत् ॥ ३१ ॥

महाहमत्संस्तरके शयानं
प्रनिद्रनीलोत्पलहासिनेत्रं ।
तृष्णासमुत्तानसुदीर्घदृष्ट्या
समब्रवीत् तं बहुशो निपीय ॥ ३२ ॥

अहो ! कनिष्ठोऽपि विवोधवृद्ध !
विद्योत्तम ! त्वं सहदेव धीर !
नितान्तपापाहतमानसं मां
विहाय विश्वत्वमदर्शयन्नु ! ॥ ३३ ॥

अश्लिष्यतां तौ पितरौ नितान्तं
त्वयैव यत् तत् समुदारभक्त्या ।
निषेवितुं तौ खलु तत्समीपे
यासि प्रतिष्ठस्व नु ! साधु साधु ! ॥३४॥

असारसंसारविवृद्धकामं
विमुच्य धन्योऽसि बुधाग्रगण्य ।
ऐकान्तिकात्यन्तिकदुःखमुक्तः
प्रफुल्लचित्तश्चिरशान्तिमेषि ॥ ३५ ॥

युधिष्ठिरः कातरभीमसेन-
पृष्टो भृशं — म्लानितयाभिमानः ।
योगच्युतौ कारणमस्य नूनं —
इति ब्रुवंस्तैः सममग्रमाप ॥ ३६ ॥

गतेषु तेष्वध्वसु चन्द्रकान्ती-
शैले महात्मा नकुलस्तदानीं ।
योगच्युतः कृत्तितवृक्षकल्पो
निपत्य पृथ्वीतलमाचुचुम्ब ॥ ३७ ॥

भीमस्य पार्थस्य च मुक्तकण्ठ-
विलापनादाधिकृतासु दिक्षु ।
प्रेतः परावृत्य युधिष्ठिरेण
स्म दृश्यते भूतल आशयानः ॥ ३८ ॥

नेत्राम्बु धीरत्वशिलीमुखेन
भृशं पराभूय विचारदक्षः ।
अजातशत्रुः क्षणमेव मौन-
मास्थाय शान्तोऽप्यवदद्गतासुं ॥३९॥

सौन्दर्य्य-सन्तर्जितपुष्पधन्वन् !
शान्तान्तरात्मन् ! नकुल ! त्वयेन ।
गन्तुं प्रवृत्तस्त्वमपि प्रतप्त-
संसारतो धार्म्मिक ! याहि याहि ॥ ४० ॥
अन्तर्वहिर्दुःखसहस्रलुप्तां
वसुन्धरामेकपदे विहाय ।
अध्यासितं पुण्यजनेन लोकं
प्राप्नोषि हा ! यत् तदतीव भद्रं ॥ ४१ ॥
यत् स्थानमाप्तुं त्रिदिवेश्वरोऽपि
शरीरपातन्त्वपि नो विचार्य्य ।
तपांस्यशेषाणि नु ! तप्यते तत्
प्रिय ! त्वदध्यासितता प्रयातु ॥ ४२ ॥
भीमेन पृष्टः स भृशं तदानीं
धर्म्मात्मजः कारणमस्य योगात् ।
सौन्दर्य्यगर्व्वः पतनस्य मुख्य-
मुक्त्वानुजाभ्यां पुनरप्यगच्छत् ॥ ४३ ॥
लक्ष्योन्मुखेषु प्रवलेषु तेषु
समं गतेषु प्रशमोच्छ्रितेषु ।
पवित्रमेत्र ननु नन्दिघोष-
शैलेऽर्ज्जुनो भूमितलं चुचुम्ब ॥ ४४ ॥

हाहा! चिरस्वप्नवलाभिभूते
धीरेऽर्जुने हिन्तु विलोड़िताम्सु।
वृकोदरोद्दामभयार्त्तनादै-
र्युधिष्ठिरस्याक्षि पपात पश्चात्॥ ४५॥

देवेन्द्रसङ्ग्रामसमग्रवीर्यं
तमर्जुनं चत्वपदाभियोगं।
सुस्निग्धपुष्पास्तरणोपयुक्तं
शिलातले वीक्ष्य नृपो जगाद॥ ४६॥

हा! सव्यसाचिन्! सुमते किरीटिन्!
त्वमप्यकाले ननु पापिनं मां।
समत्यजो गन्तुमलं प्रवृत्तोऽ-
भवश्च लोकान्तरमुज्ज्वलाभं॥ ४७॥

कृतं त्वया पण्डित! साधु साधु
वसुन्धरैषा न तवोपयुक्ता।
अस्मादृशानामतिपापभाजा-
मपूतसंसर्गलवोऽपि नैव॥ ४८॥

वने वने भ्रातरलं मदर्थं
नवानि मूलानि फलानि नित्यं।
आहृत्य भूयो वत्! कोमलाङ्ग!
को मस्त्वया नैव ग्रहिष्यतेऽलं॥ ४९॥

अन्तर्वहिर्व्याधिमनल्पवीर्य्यं !
समूलमुन्मूल्य चिराय यासि ।
भ्रातः ! प्रयाहि स्थितिभिः किमत्र
नितान्तदुःखानलराजिदग्धे !! ॥ ५० ॥

सुकोमलेनापि मदर्थमेव
हा हन्त ! दुःखं वहुशः प्रसेहे ।
विमुच्य दुःखोज्ज्वलतीव्रपाशो-
श्चिराय शान्तिं विमलां लभस्व ॥ ५१ ॥

हा ! भ्रातृवर्गस्य नु ! शोचनीया
दशा दृगम्बु द्रुपदात्मजायाः ।
न पारयिष्यत्यमितामशान्तिं
तवाधुनोत्पादयितुं परेत ! ॥ ५२

हे पार्थ ! न त्वामभिमनुग्मतुरः
सुदुस्तरे शोकपयोधिनीरे ।
हा ! नामशेषं कथमप्यनल्पे
स्त्वय्येतरं पातयितुं क्षमेत ॥ ५३ ॥

हाहा ! कुरुक्षेत्ररणाङ्गनेषु
स्त्रीणाञ्च पुंसाञ्च शिशोश्च तावत् ।
आकाशभेदी विषमो विलापो
धैर्य्यच्युतिन्ते न करिष्यतीह ॥ ५४ ॥

हा ! फाल्गुने शान्तिनिकेतनन्तत्
पवित्रलोकं मधुरं लभस्व ।
यस्मिन् गतानां ननु वाञ्छनीयं
किमप्यवश्यं न हि विद्यतेऽत्र ॥ ५५ ॥

नृपः स पृष्टस्तु वृकोदरेण—
नितान्तपापं बलगर्व्वजातं ।
निश्चित्य पार्थस्य निपातहेतुं—'
जगाम भीमेन युना च भूयः ॥ ५६ ॥

सोमेश्वरं शैलमुपेत्य भीम-
श्चिराय शेते सहसा धरित्र्यां ।
तस्यैव पातध्वनिराचकर्ष
युधिष्ठिरस्यातुरमत्ति पश्चात् ॥ ५७ ॥

भीमान्तिकं प्राप्य गभीरधैर्य्य-
विभूषितः शान्तपवित्रशीलः ।
धर्म्मात्मजो मौनमवाप्य कञ्चित्
कालं तमुद्दिश्य भृशं जगाद ॥ ५८ ॥

एकाकिनं मां पुरतो निधाय
स्नेहं दयां सख्यमलं विहाय !
कृत्वा धरित्रीं बत ! वीरशून्यां
भीम ! त्वयापि प्रपलाय्यते किं ? ॥५९॥

महाप्रभावो ननु मृत्युरेषः !
भ्रातः ! समाक्रामति सर्व्वमेव ।
निरन्तरं तत्र न कोऽपि दोषो
नात्येति हा ! चेत् समयं क्रमश्च ॥ ६० ॥

वृकोदर ! त्वं प्रिय ! याहि याहि
युधिष्ठिरस्यात्र न कापि चिन्ता ।
अनन्तदुःखानुभवाय वत्स-
विनिर्म्मितस्यैव नु ! तस्य जन्म ॥ ६१ ॥

संसारकौटिल्यविभा न यत्र
न तिष्ठतो यत्र नु ! जन्ममृत्यू ।
न वासना यत्र सहा प्रवेष्टुं
स पुण्यदेशस्तव सर्म्मणोऽस्तु ॥ ६२ ॥

सुखञ्च दुःखञ्च नु ! यत्र गन्तुं
शक्नोति नो यत्र तमो न चास्ति ।
शोकश्च मोहश्च न यत्र शक्तः
स्थातुं स्थलं तत् तव शर्म्मणोऽस्तु ॥ ६३ ॥

अलौकिकज्योतिरितं समन्तात्
सत्यात्मकं पुण्यमतिप्रशस्तं ।
विश्वेप्सितं स्थानमनल्पपुण्य-
लभ्यं विशालं सहसा लभस्व ॥ ६४ ॥

मितान्यभोजित्वमलं नितान्त-
शौर्य्याभिमानित्वमपि प्रकामं ।
योगच्युतेः कारणमस्य नून-
मिति स्थिरीकृत्य पुनर्ददर्श ॥ ६५ ॥

गुणनिकरसुशोभी धार्म्मिकः पाण्डुपुत्रः
क्वचिदपि नियतीनां नैव रोद्धव्यतास्ति ।
इति नियतमनल्पं चिन्तयन्नुत्तराशां
पुनरपि सममेवं कुक्कुरेण प्रतस्थे ॥ ६६ ॥

इति श्रीअन्नदाचरण तर्कचूडामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
सहचरविरहो नामा-
ष्टादशः सर्गः ।



( दिव्यरथारोहणं । )

ततः सुमेरो रमणीयशेखरं
प्रदेशमासाद्य निराविलान्तरं ।
विमुक्तिकामो विबुधो युधिष्ठिरः
समासितुं सञ्चक्रमे सुखेन सः ॥ १ ॥
सुखोपदेशोचितदेशमिच्छतः
क्षणेन तस्येक्षणवर्त्मनि स्फुटं ।
इहाजगामैव लघूर्म्मिवाहिनी
प्रवाहिनी श्रोत्रसुपेयनादिनी ॥ २ ॥
तमालतालीवकुलालिराजिते
नवीनमेघद्युतितस्करे सुखे ।
तटेऽथ तस्या विशदोच्छ्रितान्तरे
शुना समं स स्म नृपोऽवतिष्ठते ॥ ३ ॥
विशालशालद्रुममूलसञ्श्रये
सुखं शरीरं विनिधाय पाण्डवः ।
स्वभावशोभां परमां समन्ततो
निरीक्ष्य मेने स्वदृशोः कृतार्थतां ॥ ४ ॥

तदन्तिके स प्रबशिष्टः शनैः शनैः
वितीर्य्य दीर्घां रसनां सुलोहितां ।
विधाय कायं मृदुलं शिलोपरि
प्रमोदराशिं व्यकिरन्निरन्तरं ॥ ५ ॥

गभीरभावैर्विमलैस्तु कैश्चन
नितान्तकृष्टः सः वृकोदराग्रजः ।
अनल्पवेशां तटिनीं महीरुहं
लताञ्च वीच्येह मुहुर्व्यचिन्तयत् ॥ ६ ॥

कदा कथं केन च कुत्रचित् स्फुटं
पथीदृशस्यापतितेन मानवः ।
इतस्ततः प्रेक्ष्यत एव तत् खलु
न पूर्व्वमाभात्यविशिष्टचेतसि ॥ ७ ॥

सुदृश्यसंघो बहुशो निरन्तरं
ममाक्षिणि स्नापतति स्फुटस्फुटं ।
कदापि नैवेदृशमाशु किन्त्वलं
प्रमोदमुत्पादयितुं समीश्वरः ॥ ८ ॥

अशेषसौभाग्यविशेषसम्पदा
सुखं विधीयेत नितान्ततर्पणां ।
समुज्ज्वलं गोचरमीदृशं दृशोः
स्थलं पवित्रं न तदन्यमानवैः ॥ ९ ॥

अनल्पपापप्रतिमूर्त्तिसंजुषो
ममाचिवर्त्मन्यपि सम्पपात यत् ।
सुमेरुशृङ्गं त्रिदिवोपहासि सः
मदग्रभूपावलिपुण्यसम्भवः ॥ १० ॥

विलोकितोऽस्मिन् रमणीयतावधिः
स्वभावदेवीसुषमा समीक्षिता ।
भृशं प्रहृष्टो भवशान्तिभाभरो
निरीक्षितं निर्वृतिशेषमन्दिरं ॥ ११ ॥

अहो ! दिवोऽपि प्रचुरप्रभातते-
र्विलोपकं स्थानमिदं प्रपश्यतः ।
ममाक्षियुग्मं सफलत्वमाभजत्
मनश्च विस्तारमुपाययौ भृशं ॥ १२ ॥

निरीक्षितं दृश्यचयस्य यत् परं
तदद्य दृग्जन्म कृतार्थतां गतं ।
प्रसारिताशेषविकल्पनावल-
च्छलोऽपि सौभाग्यभराभिशोभिनः ॥ १३ ॥

प्रसन्नमत्युन्नतमुत्सवोच्छ्रितं
मनोऽपि न स्प्रष्टुमहो ! कथञ्चन ।
प्रशाक यत्प्रान्तलवानपि स्वयं
तदद्यदृष्टं सततं स्वचक्षुषा ॥ १४ ॥

इदं समन्तादधितिष्ठतो मम
मनो भवत्यद्य किमप्यचञ्चलं।
अपारभ्रान्त्यम्बितरङ्गडिण्डिर-
प्रवाहमग्नो न विवेद किञ्चन ॥ १५ ॥

वदाद्य चेत् सा द्रुपदेश्वरात्मजा
प्रियप्रवासस्थास्यदहो! हितैषिणी।
तदा न का निर्भृ तिराविलेतरा
समन्ततो मे प्रसृताजनिष्यत? ॥ १६ ॥

हिमां विजेतः क्व वृकोदर! क्षणा-
द्विलीनतामेषि? धनञ्जय! क्व नु!
किरातवेशेङ्कितशोभिशङ्करा-
नुकम्पित! भ्राम्यसि हन्त! सुन्दरे? ॥ १७ ॥

क्व कायसौन्दर्य्यविडम्बिताहत-
मनोज! हाहा नकुल! प्रियम्वद!
क्व तिग्मबुद्धे सहदेव! पण्डित!
निराश्रयं मामवमत्य वर्त्तसे? ॥ १८ ॥

कमद्य देशं स्थितिभिर्विभूषितं
विधत्थ विस्मृत्य धराभिधानकं?
सकृत्त्विहागच्छत वीक्ष्य वाञ्छितं
लभध्वमामोदभरं निरामयं ॥ १९ ॥

प्रमोदसन्तोषरसार्णवोदरे
भृशं निमग्नोऽपि न पारयाम्यलं ।
प्रमोदलेषन्त्वपि दुःखवर्जितं
विना नु ! युष्मानहह ! क्षमाजुषः ॥ २० ॥

निरामयस्थानमिदं स्फुटस्फुटं
स्वदेत युष्मभ्यमहो नु ! नो किमु ?
वियोगवह्निर्ननु वो निरन्तरं
मनस्त्वणं मे किमु नो दहत्यलं ? ॥ २१ ॥

पुरोगता निर्झरिणीव जीवन-
भरप्रवाहं कथमत्र मुञ्चथ ?
अहो ! ! नु ! युष्मान् करुणा निरन्तरा
किमेवमामन्त्रयितुं न चक्षमे ? ॥ २२ ॥

विवेकचिन्तास्तिमितेन चक्षुषा
प्रकृत्यनन्तोदरमाविलोकयन् ।
समुष्णनिश्वासभरं त्यजन् मुहु-
रवोचदेष स्वत एककोऽप्यहो ! ॥ २३ ॥

किमेवमस्मिन् जगदन्तरे भृशं
विचित्रता सन्ततमेव राजति ?
विधातुरिच्छास्तरणे भयानकः
सुखेन वोढुं क्षमते परं शुभं ॥ २४ ॥

कथं नु ! सृष्टिर्जगतः ? कथं स्थितिः ?
लयः कथं ? को घटते समाश्रयः ?
किमत्र तत्त्वं ? नय एष कीदृशः ?
क्षमेत को ज्ञापयितुं सविस्तरं ? ॥ २५ ॥

प्रवालवन्मानुषमानसं कथं
वितीर्णरागेण भृशं प्रलेपितं ?
कथं दयास्नेहममललेपन-
भृशाहतो मानव एति दुःखितां ? ॥ २६ ॥

प्रवालपुष्पच्छदशोभितस्तरु-
रयं कथं याति विशुष्कपत्रतां ?
मनोहृतौ शक्तमनन्तमम्बुजं
कथं क्षणाद्गच्छति मुद्रणां भृशं ? ॥ २७ ॥

य एव पीयूषमरीचिरुज्ज्वलः
क्षणेन विश्वं धवलं करोत्यलं ।
करैरसंख्यैर्नवनीरदावलि-
प्रसारिकुक्षौ स कथं प्रलीयते ? ॥ २८ ॥

प्रचण्डवृक्षावलिराजिता धरा
क्षणेन संयाति मरुत्वमुल्बनं ।
वनैर्विहीना मरुभूमिरप्यहो !
शचीपतेः काननभावमेति किं ? ॥२९॥

नदीप्रवाहः कलभैरवः स्वतः
प्रवाति यस्मिंस्तटघातपूर्व्वकं ।
विचित्रमेतत् किमपीह तत् स्थलं
नगत्वरूपेण किमु प्रकीर्त्तितं ? । ३० ॥

अनन्तसौन्दर्य्यनितान्तशोभिना
रथेन दिव्येन सुवेगशालिना ।
अथोपतस्थे त्रिदिवेश्वरः स्वयं
युधिष्ठिरस्यान्तिक एव तत्क्षणे ॥ ३१ ॥

स्वमूर्त्तिमास्थाय सहस्रदृक् तदा
रथाद्विनिर्गत्य सुखेन किञ्चन ।
स्थलन्त्वतिक्रम्य नितान्तचिन्तन-
निमग्नचित्तं नृपमब्रवीद् भृशं ।। ३२ ॥

अजातशत्रो ! सुपवित्रमानस !
विमुच्य शोकं प्रकृतिस्थितो भव ।
भृशं त्वदामन्त्रणहेतवे स्वयं
सुरेश्वरोऽस्मिन् भवदन्तिकेऽगमत् ॥ ३३ ॥

दृशौ समुन्मीलय लोचने क्षिप
निरूपय त्वं सबलो भव स्वयं ।
किमत्र चिन्तोज्ज्वलवह्निसन्तति-
शिखासु चित्तं विनिधाय खिद्यसे ? ३४

पवित्रगम्भीरसुकोमलं वचः
स्वरीश्वरस्याशु निशम्य पाण्डवः ।
सुधाभिषिक्तस्त्विव तत्क्षणाद् भृशं
नितान्तशान्तः सहसोत्थितोऽभवत् ॥ ३५ ॥

ततो नृपः प्रीतिसुशोभिताननः-
क्रियाभिरेवाशु विधाय सत्क्रियां ।
निपत्य भूमौ त्रिदिवेश्वरान्तिके
चिरं समालम्बत दीर्घदण्डतां ॥ ३६ ॥

भृशं विहस्यैव सहस्रलोचनः
क्षणेन तं बाहुलताभिवेष्टितं ।
विधाय सद्यः सुपवित्रया गिरा
निनाय कर्म्मालमलं ध्रुवः स्वयं ॥ ३७ ॥

सुधांशुवंशाम्बुधिदिव्यकौस्तुभ !
पवित्रभावाशयपूतमानस !
शुभक्रियाभिर्जितदेवलोकक !
कृतं किलात्यादरदर्शनेन ते ॥ ३८ ॥

ध्रुवं त्रिलोकीमनुजो जितस्त्वया
स्वकार्य्यजातेन पवित्रताजुषा ।
अतिप्रसन्नोऽमृतभुग्गणः स्वयं
शुभानि सद्यो भवतोऽभिवाञ्छति ॥ ३९ ॥

अवेहि मां त्वं त्रिदशालयेश्वरं
सुपर्व्वभिः प्रेरितमुत्सवप्रियं ।
अहो ! भवन्तं सशरीरमुज्ज्वलं
त्रिपिष्टपं नेतुमिहागतं मया ॥ ४० ॥

अनेन देहेन यदेव मानवः
समीश्वरो गन्तुमलं भवान् स्वयं ।
पदा समाक्रामति तत् स शक्तितः
स्फुरन्ति नेतो मनुजप्रयुक्तयः ॥ ४१ ॥

विमानमेतन्ननु पुष्पकाभिधं
पुरोऽभवन्तं सततं प्रतीक्षते ।
द्रुतं समारुह्य सुखेन साम्प्रतं
लभस्व पुण्यस्थलमेव भाग्यतः ॥ ४२ ॥

वसुन्धरायां विषयाभिलाषतो
बहूनि कष्टेन दिनानि भूपते !
ननु व्यतीतानि चिराय साम्प्रतं
पवित्रलोके परनिर्वृतो भव ॥ ४३ ॥

श्रमेण खिन्नोऽसि भृशं ततस्ततो
विरम्य नित्यातिसुखाय कौतुकात् ।
यतस्व मामेहि भवाशु सत्वरो
न भद्रकामो हि विलम्बते क्वचित् ॥४४॥

इति ब्रुवन्तं मधुरं खरीश्वरं
प्रणम्य राज्ञा गललग्नवाससा।
मुहुर्मुहुर्बद्धकराम्बुजन्मना
सभक्तिकं वक्तुमिहोपचक्रमे ॥ ४५ ॥
महान्ति कृत्वापि तपांसि मानवो
यदन्तिकं यातुमलं न हि क्षमः।
खरीश्वरः सोऽद्य मदर्थमेव यत्
धरागतस्तन्ननु पुण्यवानहं ॥ ४६ ॥
अनन्तपापाभिरतस्य हा! मम
क्व वा शुभस्तिष्ठति पुण्यसञ्चयः :
भवद्विधानां करुणेद्रचेतसां
कृपा जयत्यत्र निदानवर्जिता ॥ ४७ ॥
सुरेन्द्र! सुप्तावपि मानसे मम
विशिष्टचिन्ताभरमर्द्दितेऽपि यत्।
उदेतुमेव क्षमते न तत् स्वयं
दयालवात्ते पुरतोऽभिवर्त्तते ॥ ४८ ॥
श्रुतं गृहीतं सुसमीक्षितञ्च य-
द्वतं तदेवानृतमेव वा किमु ?
सुरालये वा भुवि वा रसातले
न वेद्मि कस्मिन्नधुनास्मिता मम ॥ ४९ ॥

गुरो ! त्रिलोकेश्वर ! किन्तु नेष्यते
सुरालयोऽप्यद्य मयात्र वासिना ।
प्रियानुरक्ता सहजाश्च लीनतां
स्म यान्ति यस्मिन् मम तत् प्रियप्रियं ॥ ५० ॥

ततः शचीशः प्रियमब्रवीत् पुनः
वृथा समाशङ्कसएव ते प्रियाः ।
पुरैव देवालयमाश्रयन् सुखं
प्रियान् पुनर्द्रक्ष्यसि यानमाश्रय ॥ ५१ ॥

युधिष्ठिरस्तुष्टिमवाप्य तत्पर-
मुवाच भूयस्त्रिदिवेश्वर ! प्रभो !
पुरा भवानाश्रयतु स्वयं रथं
मदाश्रितः श्वाथ ततोऽहमाश्रये ॥ ५२ ॥

विदीपयन् पर्व्वतगह्वरं ततः
स्मितेन तीव्रं वदति स्म वृत्रहा ।
कृतं विलम्वेन च कौतुकेन च
ध्रुवं मतिस्ते न शुनि प्रवर्त्तते ॥ ५३ ॥

अपूत एष श्वभिशुः प्रवाञ्छितः
कदापि नो निर्म्मलपूतचेतसां ।
अतः परित्यज्य परीक्षणं मम
विधीयतां दिव्यरथाश्रये मनः ॥ ५४ ॥

सुरेन्द्रवाक्यं सुनिशम्य कातरो
युधिष्ठिरः पूर्व्ववदब्रवीत् पुनः ।
गुरो ! त्रिलोकेश ! समं त्वया कथ-
मधन्यपुंसः कुतुकं नु ! सम्भवेत् ? ॥ ५५ ॥

सुर ! त्वदग्रे मम जल्पितं मुहु-
र्ध्रुवं गुरो ! चञ्चलता-प्रकाशनं ।
तथाप्यनुक्तौ न गतिः समाश्रित-
रिपोरपि त्तेपणमत्र गर्हितं ॥ ५६ ॥

चिराश्रितं कुक्कुरमेतमुत्सुकं
कथं निराकृत्य सुरालयोत्सुकः ।
भवामि ? ह्रिवाश्रितलोकतोऽपि मे
धरा वरा त्वाश्रितपालनोचिता ॥ ५७ ॥

ततो निवृत्तं वचनाद् युधिष्ठिर-
मुवाच भूयः कटु चारु वासवः ।
कथं मतिस्ते विपरीतवर्त्मनि
निरङ्कुशेवाशु सुखेन धावति ? ॥ ५८ ॥

अहो ! विवेकं तव पश्यतो मम
स्वतो नु ! निर्गच्छति हास्यसन्ततिः ।
अपूतसंसर्गवशेन हा ! स्वयं
विवेकवान् कः कलुषत्वमिच्छति ? ॥५९॥

विवेकवन् ! मङ्गलकामिनः सुराः
अभद्रकार्य्ये विनियोजयन्ति किं ?
मतिं समावर्त्तय दुष्टवर्त्म नो
गृहाण यानं सुरलोकलब्धये ॥ ६० ॥

ततः शुना कातरमीक्षितो मुहु-
र्युधिष्ठिरः प्रीतिकृपैकमन्दिरं ।
भृशं चिरञ्च प्रविचिन्तयन् पुनः
प्रचक्रमे वक्तुमनल्पसंयतः ॥ ६१ ॥

न विद्यते तेऽविदितं नु ! किञ्चन
भवान् मनोगाशयमप्यवेत् स्वतः ।
चिरं भृशं मेऽनुचरं हि कुक्कुरं
विहातुमिच्छामि न जीवनावधि ॥ ६२ ॥

क्व धर्म्मबुद्धिः क्व नु ! वेतरा मतिः
सुरेश ! तद्दे दितुमत्र न क्षमे ।
गुरो ! प्रपद्ये शरणं तवाधुना
यदेव भद्रं तदिहोपदिश्यतां ॥ ६३ ॥

स्वरीश्वरोऽथाह—विवेकिपण्डित !
किमेवमेतद्धृदयं विधीयते ।
अनर्थचिन्तानलसन्ततीन्धनं
कथं नु ! वा संशयजातमिष्यते ? ॥ ६४ ॥

वसुन्धरास्थस्य नु ! पापमुत्कटं
चिराश्रितानां परिहाणमीष्यते ।
द्युलोकपाथ्यं सुकृतञ्च दुष्कृतं
प्रबाधितुं त्वां कथमेव शक्नुतः ? ॥ ६५ ॥
विशेषतः स्वर्गसुधार्णवोदरे
निमज्जतस्त्वाश्रितहानदुष्कृतं ।
न गण्यमेव त्रिदशाभिनन्दितं
द्युलोकमाप्तुं प्रयतस्व सत्वरं ॥ ६६ ॥
न दिव्ययानोचित एष कुक्कुरः
इमं तदारोपयितुं रथेऽत्र न ।
सह्ये द्युलोके यदि ते रुचिस्तदा
गृहाण यानं प्रविहाय कुक्कुरं ॥ ६७ ॥
अनन्तकार्य्ये त्रिदिवस्य मत्पथं
निरीक्षते तन्न विलम्बितुं क्षमे ।
अयि रथं दिव्यमहं यदीच्छसि
श्वकाममाक्षिप्य मदन्तिको भव ॥ ६८ ॥
इति ब्रुवन् दिव्यविमानमाश्रितो
युधिष्ठिरेणोच्यत वासवः स्फुटं ।
पुलोमजाजीवन ! तेऽनुकम्पया
कृतः कृतार्थोऽस्मि चिराय पाण्डवः ॥६९॥

चिराय तेऽनुग्रहवृष्टिरस्तु सा
धरासनस्थेऽपि मयि प्रतापवन् !
सुरालयाय प्रतियाहि तत् कुरु
यथा न कार्य्यक्षतिरस्ति मत्कृते ॥ ७० ॥
चिराश्रितं श्वानमलं विहाय मे
न दिव्यलोकेऽपि मनः प्रवर्त्तते ।
खरायमाने नगभूर्द्धनीह मे
वपुर्विलीनं सहसा भविष्यति ॥ ७१ ॥
इतीत्थमाशु ब्रुवतो नृपस्य
युधिष्ठिरस्योपरि पुष्पवृष्टिः ।
विद्याधराणां करपद्ममुक्ता
पपात तस्मिन् क्षण एव भूयः ॥ ७२ ॥
श्वा श्वस्वरूपं परिहाय धर्म्म-
मूर्त्तिं समास्थाय सुखं तदानीं ।
युधिष्ठिरं प्राह नु ! वत्स ! साधो !
धर्म्मं कृपालो ! ननु मामवेहि ॥ ७३ ॥
परीक्षणायैव तवैकदाहं
वाकीं तनुं स्मात्र धरामि पूर्व्वं ।
इदानीमप्येवमहो ! परीक्षा-
म्बुधेः परं पारमगच्छ एव ॥ ७४ ॥

ततः प्रहर्षाश्रिपयः प्रसिक्तः
कर्त्तव्यमूढ़ोऽपि ननाम धर्म्मं ।
उवाच चाजातरिपुः पितस्त्व-
मेवं तनूमप्यदधा मदर्थं !! ॥ ७५ ॥

धर्म्मस्ततः साधुयुधिष्ठिरस्य
पृष्ठे करं सादरमानिधाय ।
उवाच वत्स ! त्रिदिवाय याहि
द्रुतं महेन्द्रेण कृतं विलम्बैः ॥ ७६ ॥

धर्म्मं शचीपतिमपि प्रयतो धरेशो
भक्त्या पुनः पुनरलं सुचिरं प्रणम्य ।
आज्ञां तयोः सदययोः शिरसा गृहीत्वा
स्वर्गाय यानमतुलं लभते स्म सद्यः ॥ ७७ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
दिव्यरथारोहणं नामै-
कोनविंशः सर्गः ।

( त्रिदिव-प्रवेशः । )

अथ देवरथेन काञ्चन
पदवीं सुन्दरलक्षणान्वितां
वसुधापतिना मुदा सम-
मतिचक्राम सुरेश्वरो द्रुतं ॥ १ ॥

भयविस्मयपूर्णमानसं
धरणीस्वामिनमब्रवीत् स्फुटं ।
त्रिदिवाधिपतिः स्मिताननैः
क्षणशोभा-विनिवेदिताशयः ॥ २ ॥

नियतं नियताधिवासिना-
मपि चित्तं ननु विस्मयाप्लुतं ।
कुरुते स्थलमेतदीप्सित-
मचिरोपस्थितिकस्य का कथा ! ॥ ३ ॥

मुनयः प्रमुदैतदाप्तये
तनुपातानवमत्य सन्ततं ।
परिहाय जनान् धनान्यपि
…यपूर्णे विपिने वसन्त्यलं ॥ ४ ॥

अतिभाग्यधरो भवान् ध्रुवं
त्वदृते कोऽपि कदापि नाप्तवान् ।
स्थलमीदृशमुत्सवप्रदं
मनुजानां मनसोऽप्यगोचरं ॥ ५ ॥

त्रिदिवान्तिकमागता वय-
मचिरेणैव कथावलम्बिनः ।
सुकृतिन् ! शुभभाग्यशोभित !
पुरतः पश्य दिवो विभाततिं ॥ ६ ॥

रमणीयविभो विराजते
पुरतः सौरजगत्पथोपरि ।
मधुरो मधुरः प्रदेशको
गमनीयः सततं महात्मनां ॥ ७ ॥

मिहिरः च्चणदाकरोऽप्यहो !
इह नैव स्फुरतः कदाप्यलं ।
नवदीप्तिमयोऽयमात्मनः ।
प्रभयैव प्रचुरं प्रदीप्यते ॥ ८ ॥

इह नैव दिवा विभावरी
तिमिरं भास्करतीव्ररश्मयः ।
वसुधातलवत् कदापि नो
सुखदुःखाङ्कुरराजिरीक्ष्यते ॥ ९ ॥

प्रहरे प्रहरे नभःस्थलं
किमपि प्रीतिदवेशमीहते।
क्वचनामितसौररश्मिभिः
स्फुरितं क्वाप्यमृतायितं शुभं ॥ १० ॥

द्रुतहेममयो वलाहकः
क्वचिदस्मिन् नु! सुवर्णवप्रके।
नवचित्रितशक्रचापव-
न्मधुरं भाति चिरं स्तरे स्तरे ॥ ११ ॥

हसतीव चिरं स्फुटं घन-
श्चपलास्मिन् स्फुरति चणे चणे।
कुलिशं न कदापि दीप्तिमत्
पतितुं गर्जितुमप्यहो! चमं ॥ १२ ॥

रुचिरो नवनीरदो भृशं
कुसुमासारमलं नु! वर्षति।
मणिसञ्चयवन्निरन्तरं
ननु तैः कोऽपि नु! सिच्यते क्वचित् ॥ १३ ॥

पवनो मृदुलो निरन्तरं
मृदु वाति स्वनवञ्चितः शनैः।
इह नैव कदापि वात्यया
किमपि चेपयितुं नु! शक्यते ॥ १४ ॥

इह सुन्दरसुन्दरे स्थले
शिशिरोषास्य न भेद ईक्ष्यते ।
न ऋतुक्रमवर्त्तनं भृशं
प्रविधत्ते कमपि व्यथाकुलं ॥ १५ ॥

चिरमाधवरागचित्रिते
नवमेघोच्छ्रितशस्यपङ्क्तयः ।
ननु तत्र सुपक्वसुन्दर-
मृदुगुच्छा नु ! हरन्ति मानसं ॥ १६ ॥

तरवो नवपल्लवावलि-
कृतभूषा मृदुला लता अपि ।
युगपत् कुसुमैः फलैरपि
फलिताः सुरभिदुपुष्पिता अपि ॥ १७ ॥

मधुरे मधुरे सुखाकरे
मृदुलश्यामलपल्लवोदरे ।
मधुरे मुकुले नवे चिरं
चिरपक्वं नु ! रसालमीक्ष्यते ॥ १८ ॥

मधुसागरमध्यगा अपि
भ्रमराश्चञ्चलतां न यान्त्यहो !
स्फुरपुष्पभरस्य सौरभैः
परितृप्ता नितरां चिरस्थिराः ॥ १९ ॥

विहगास्तरुणास्तरुस्तरे
प्रतिशाखञ्च वसन्त ईप्सितं ।
श्रवणेन्द्रियपेयमुत्प्लवं
विरता गातुमहो नु ! केऽपि न ॥ २० ॥

मधुपुष्पफलाश्रितेष्वपि
निवसन्तोऽप्यचला विहङ्गमाः ।
स्पृहयाविनिराकृताश्चिरं
न किमस्याद्भुतताभिदर्शकाः ? ॥ २१ ॥

अवशा अपि पक्षिणो भृशं
प्रभवन्ति स्थिरतां निवेदितुं ।
न नु ! कस्यचिदत्र मानसं
ननु हर्त्तुं क्षमते स्पृहा क्वचित् ॥ २२ ॥

इह कस्य न कुक्षियातना
न वुभुक्षा विषमा न कामना ।
न जरा मरणं मनोव्यथा
परितापाय नु ! जायते क्वचित् ॥ २३ ॥

अमृताशिनमत्र जीविनं
प्रजिघत्सा न कदापि वाधते ।
दमशान्तिसुखेन सर्व्वदा
परमं मोदमुपासतेऽखिलाः ॥ २४ ॥

इह दिव्यधरानिवासिनो
दुरितासौरभलेशमप्यहो !
न विदन्ति कदापि केचन
प्रशमामोदविभूषितान्तराः ॥ २५ ॥

दुरितस्य मलस्य च क्वचित्
ननु वार्त्तापि न कस्यचित् स्वतः ।
श्रवणे विमलैर्ऽभिवाधितुं
चमतेऽस्मिं स्त्रिदिवाधिवासिनः ॥ २६ ॥

इह दिव्यनिकेतनोदरे
हृदये कस्यचनापि चारुणि ।
अभिरूप-विरूपचिन्तनं
समुदेति चणमप्यहो ! किमु ? ॥२७ ॥

मधुरा मधुरा चिरस्थिरा
सुषमा किन्न भृशं प्रतिष्ठिता ?
चिरशान्तिरहो ! पदे पदे
वचनातीतमलं विराजते ॥ २८ ॥

अमितः खलु जीवनावधि-,
रमितं यौवनमत्र सर्व्वदा ।
न विभीषयितुं कमप्यहो !
मरणं जन्म च मतुरीश्वरः ॥ २९ ॥

स्थविरेषु च बालकेषु च
नयने पातय विस्मयाप्लुत !
नवयौवनभूतिभूषिताः
इह सर्व्वे सुखशान्तिसुस्थिराः ॥ ३० ॥
सलिलं विपिनं निकेतनं
विटपी वीरुदहो ! स्थलं सरः ।
तटिनी कुसुमं नु ! जीविनः
सकलं नूतनदिव्यदीप्तिमत् ॥ ३१ ॥
स्थलमेतदलं नु ! मायया
किमु सृष्टं ! किमु दिव्यवर्च्चसा ।
प्रविलिप्तमनीचतोच्चता-
भरवार्त्तापि च नात्र विद्यते ॥ ३२ ॥
सुकृतिन् ! मधुरं निरूपय—
सुरगङ्गा स्फुटचारुनादिनी ।
किमपि श्रवणे सुधाभरं
विकिरन्ती वहति स्वयं चिरं ॥ ३३ ॥
विशदेऽत्र नदीतटे भृशं
विमला रत्नततिर्विराजते ।
किमपि प्रचुरप्रमोदतः
सुरबाला निरताः प्रदेवने ॥ ३४ ॥

शिशवः प्रमुदो दिवौकसा-
ममृतोद्भातिनिषेधकारिणि ।
सलिले मधुरे परस्परं
किमपि क्रीड़नमाशु कुर्व्वते ॥ ३५ ॥

इह कुन्तलराजिभिर्धरां
परिमार्ज्य प्रसभं नु ! बालिकाः ।
किमपि प्रथिताः क्षिपन्त्यलं
चरणं पङ्कजकोरकोपमं ॥ ३६ ॥

अमुमत्र शिशुं मुहुर्मुहु-
र्विहरन्तं मकरे विलोकय ।
ननु चंक्रमणं विना रवं
कुरुते बालकबालिकागणः ॥ ३७ ॥

त्रिदिवस्य विचित्रताश्रितं
सकलं वीक्ष्य कृतार्थदृग् भव ।
इह दिव्यरथस्तु नीरवं
स्वयमाकाशपथेन गच्छति ॥ ३८ ॥

अचिरेण जगत् समन्ततः
सुरयानं भ्रमितुं समीश्वरं ।
अलघुं लघुमप्यलौकिकं
शुभवुद्धे ! कुरुते प्रतिक्षणं ॥ ३९ ॥

चिरशान्तिमयेन भाश्वता
सुरवृत्तावलिसाधुशोभिना ।
तुलनां विदधाति को भुवः
सममेतेन विवेकपण्डितः ? ॥ ४० ॥

नयनं पुरतो विकीर्य्यतां—
श्रमखिन्नः पतगः सुखाशया ।
शममेति भृशं विहङ्गम-
ततपत्रावलम्ब्य निर्भयः ॥ ४१ ॥

ननु ! केशरिकामिनीपयो
गजपोतो भृशमापिवत्यहो !
हरिणा हरयः परस्परं
परमाश्लेषसुखं न यान्ति किं ? ॥ ४२ ॥

तरुणैरुरगैः समं चिरं
कुतुकाच्चारुवितीर्णपुच्छकान् ।
घनमित्रचयान् नु ! दीव्यतो
नितरां वीक्ष्य सुशान्तिमाप्नुहि ॥ ४३ ॥

इह नैव ननु प्रतारणा
न च हिंसा न च पापवासना ।
न च धूलिकणो न पूतयो
न च विद्वेषलवोऽपि विद्यते ॥ ४४ ॥

प्रविशन्निह कोऽपि कोविदः
किमु निर्गन्तुमितो नु ! वाञ्छति ?
रुचिरा सुरवालिका चिरं
कुसुमानि खतएव वर्षति ॥ ४५ ॥

मनुजाः शुभकर्म्मशोभिनो
वसुधाखेलनपावनव्रतं ।
सुखदुःखचयेन सन्तत-
मिदमुद्याप्य लभन्त एव नु ! ॥ ४६ ॥

न जरेह नु ! केशकर्षणं
मरणेनैव समं करोत्यहो !
विरहामितवासनोद्भवाः
न विकारा व्यथयन्ति कञ्चन ॥ ४७ ॥

तरुगुल्मलतादयश्चिरं
सुषमाराशिसुशोभिनो भृशं ।
निभृतं ननु निद्रिता इव
प्रकृतिक्रोड़वितीर्णसंस्तरे ॥ ४८ ॥

इह सृष्टिरहो ! दयामयी
प्रकृतिर्हास्यमयी सुनिर्म्मला ।
अनुभूतिरपार्थिवामल-
सुखसौन्दर्य्यततेर्निरन्तरं ॥ ४९ ॥

अनुरागविनाकृतात्मनो
वसतोऽस्मिन् हृदयं निराविलं।
भृशमाहरतोचितात् सुखं
जगतोऽस्मात् मधुरत्वमुत्सुकं ॥ ५० ॥

इह चिरं मधुसम्भववल्लरी
मधुरनूतनकोरकसज्जिता।
नवनवे प्रकृतेः प्रतिवस्तुनि
वहति सुन्दरतालहरी भृशं ॥ ५१ ॥

माधुर्य्यपूर्णममलं ननु वस्तुजातं
तत्तत् पुनःपुनरहो! परिदर्शयंस्तं।
साधुं युधिष्ठिरनृपं त्रिदिवाधिदेव-
श्चक्रे प्रफुल्लहृदयस्त्रिदिवप्रवेशं ॥ ५२ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
त्रिदिवप्रवेशो नाम
विंशः सर्गः।

( नरकाभिनयदर्शनं । )

ब्रह्मर्षिदेवर्षिनृपर्षिदेव-
गन्धर्व्वविद्याधरसेव्यमाने ।
मङ्गल्यवस्तूपहितेऽचिरेण
सुरालयेऽस्मिन् रथ आविरासीत् ॥ १ ॥

दिव्यं विमानं सुनिरीक्षमाणाः
उदीरयामासुरलं जयन्ते ।
न केवलन्तेन जयस्वनेन
स्वर्य्यांप्रमासीद् वलिसद्म भूश्च ॥ २ ॥

चतुष्पथे दुन्दुभयस्तदानीं
नेदुः स्वयं श्रोत्रनिपीयमानं ।
उदग्रीवकर्णा मधुरस्वरेण
चक्रे त्रिलोकी ननु तेन तेन ॥ ३ ॥

कुतश्चनास्मिन् स्वयमागता सा
निरन्तरा सुन्दरपुष्पवृष्टिः ।
समन्ततः सौरभभारजातं
विकीर्य्य मोदाय चिराय जाता ॥ ४ ॥

नवो नवो धीरतमः समीरो
मन्दाकिनीपङ्कजमोदवाही ।
निनादनिःस्वो ननु धूलिहीनः
उत्पादयामास चिरप्रमोदं ॥ ५ ॥

उद्घाटिते यानकपाटसार्थे
समुत्सुकैर्द्देवगणैः समन्तात् ।
इन्द्रोऽवरुह्य स्वयमेव धृत्वा-
वरोहयामास करे धरेशं ॥ ६ ॥

एकैकशस्तान् प्रणतेन मूर्द्ध्ना
पदाम्बुजे भक्तित आननाम ।
युधिष्ठिरस्तेऽपि मुहुर्नितान्त-
प्रीत्यावदंस्तस्य शुभं यशश्च ॥ ७ ॥

पूर्णे भृशं प्रीतिभरप्रकाशे
युधिष्ठिरस्यान्तिपथस्य शान्तः ।
अलौकिकैश्वर्य्यनितान्तशोभी
पान्थो वभूवाशु सुयोधनः सः ॥ ८ ॥

अपूर्व्वसन्तोषनितान्ततृप्त-
मैश्वर्य्यसम्भारसुशोभमानं ।
वीक्ष्यापि दुर्य्योधनमत्र राजा
न दृष्टवान् किञ्चन नोक्तवांश्च ॥ ९ ॥

नवातिथिः स्वः स उवाच धीरः
खरीश्वरं प्रीतिविसारिवाचा ।
हे देव ! सर्व्वज्ञ ! जगज्जनानां
वेत्स्यान्तरं भावमलं महिम्ना ॥ १० ॥

हा ! द्रौपदीं भ्रातृगणञ्च रक्तं
विना क्षणायापि न शान्तिमेमि ।
अतो यथा स्यादचिरं समं तैः
सङ्गः शिवो देव ! तथा विधेहि ॥ ११ ॥

मुहुः सनिर्बन्धमिहार्थ्यमानो
नगारिराहूय सुविज्ञदूतं ।
उवाच भद्र ! त्वरितं धरेन्द्र-
मेतं नय स्थानममीप्स्यमानं ॥ १२ ॥

इन्द्रानुमत्या धरणीश्वरस्य
प्रीत्या च दूतोऽपगतान्यकार्य्यः ।
विभावरीनाथकुलाङ्कुरेण
समं यथास्थानमभिप्रतस्थे ॥ १३ ॥

अतीत्य पन्थानमलं कथञ्चित्
सुखेन पाण्डोस्तनयः स जग्ये ।
भयङ्करे भीषणभीषणेऽस्मिन्
वर्त्तावहे कुत्रचन प्रदेशे ? ॥ १४ ॥

उवाच दूतोऽथ नु ! वामदेशे
तान्तामसीं प्रेतपुरीं प्रपश्य ।
पापस्पृहा तिष्ठति यावदत्र
घोरानलैर्दह्यत एव तावत् ॥ १५ ॥
दक्षप्रदेशे ननु साधुशील !
न गोकुलो मध्यमलोक एषः ।
कुकर्म्मभाजोऽप्यनुतापहीनाः
अस्मिन् सहन्ते भृशपीड़नानि ॥ १६ ॥
क्षणे क्षणे ते निरयानुसक्ताः
भृशार्त्तनादैः परिकम्पयन्ति ।
प्रदेशमेतं चिरयातनाभिः
क्षणे क्षणे मूर्च्छितताः प्रयान्ति ॥ १७ ॥
पश्याग्रतो भीषणशोणिताब्धौ
भृशं निमग्ना नरघातिनस्ते ।
शीर्षे हताः प्रेतपुराधिदेव-
दूतैः स्वयं भीषणमारुदन्ति ॥ १८ ॥
पृष्ठे निरीक्षस्व—दयालुचित्त !
केचिन्महाव्याधिविषाभिदष्टाः
दुर्गन्धिभिः कर्द्दममस्य नित्यं
मलैश्च मूत्रैश्च विवर्द्धयन्ति ॥ १९ ॥

इतस्ततोऽस्मिन् क्रिमिकीटसंघाः
सदा दशन्तः प्रसभं प्रगल्भाः ।
अहो ! महापापनिपीड़ितानां
प्रज्वालयन्त्यक्षययातनाग्निं ॥ २० ॥

कीटैः समन्तात् प्रसभं प्रदष्टाः
मुहुर्मुहुर्भूतलमालुठन्ति ।
रुदन्ति चोच्चैःस्वरमत्र नीति-
पथानभिज्ञा व्यभिचेरुरेते ॥ २१ ॥

भग्नावशेषे नगरे विलुप्त-
सरःसुखोद्यानवितीर्णमार्गे ।
तमोमयेऽन्योन्यमिमे दशन्ति
प्रतारकाणां ननु दण्ड एषः ॥ २२ ॥

जिह्वासु सन्तप्तमहाशलाका-
विद्धाः पतच्छोणितसिक्तदेहाः ।
क्रन्दन्ति पापव्यसनप्रसक्ताः
प्रशास्तिरेषा परनिन्दुकानां ॥ २३ ॥

अहो ! निरीक्षस्व—पुरो ज्वलन्ति
श्मशानसंघाः परिभीषणाभाः ।
कृतान्तदूता इह पापिकायं
क्षित्वाल्पमल्पं विनिपातयन्ति ॥ २४ ॥

रुदन्ति मूर्च्छन्ति परिभ्रमन्ति
क्षणे क्षणेऽस्मिन् म्रियमाप्नुवन्ति।
स्वल्पप्रये साधुविघातकानां
निरीक्ष्य दण्डं—च्यवते मनो नः ॥ २५ ॥

इमेऽनुतापानलदह्यमानाः
क्षणे क्षणे भीषणमारुदन्ति।
क्षणे क्षणे सञ्चितपापमाशु
विस्मृत्य मौनं परमं भजन्ति ॥ २६ ॥

द्वितीयदेशस्थितपापिसंघाः
स्मृत्वा निजां दुष्कृतिराजिमन्तः।
आच्छाद्य वक्त्राणि करैः प्रकामं
लज्जात एवानमिताननाः सुरः ॥ २७ ॥

दग्धानुतापानलपीड़िताना
निरीक्ष्यतां शान्तपवित्रचित्त !
निरन्तरा लोचनवारिधारा
प्राणा विदीर्णा इव हृद्विदीर्णा ॥ २८ ॥

परेतपृथ्व्याः परिखेव भाति
स्रोतस्वती वैतरणी समन्तात्।
तमोमयी वह्नितरङ्गवेग-
प्रवाहसंघो वहतीह भीमं ॥ २९ ॥

अस्यास्तटिन्या उपरि प्रभाति
वितीर्णजिह्वाग्निमयो नु ! सेतुः ।
धूमावृतो नेह विभाकरार्चिः
न वा सुधांशुर्न च तारकालिः ॥ ३० ॥

हा ! पापिनोऽनेन पथाविरामं
निनादयन्तो जगदार्त्तनादैः
कृतान्तदूताभिहताः समन्ता-
द्यायान्ति यान्त्यथ्यलमुत्कटाभाः ॥ ३१ ॥

अस्रात्मके वारिणि कालदूत-
निक्षिप्यमाणा इह पापरक्ताः ।
इमे विलापाच्चरमारुदन्तो
विशिष्टकष्टेन नु ! सन्तरन्ति ॥ ३२ ॥

प्रतप्तलौहोत्कटवज्रकण्ठः
शाखासु वृक्षस्य नु ! दोल्यतेऽयं ।
हा ! नीरवं दृश्यमिदं समीक्ष्य
भवानशेषं किमु कष्टमेति ? ॥ ३३ ॥

पुरी प्रशस्ता ननु तामसीय-
मुच्चैर्विलापं क्षिपति प्रचण्डं ।
कृतं कृतं हा ! करुणाधरस्य
तवाक्षिपातेन समन्ततोऽस्यां ॥ ३४ ॥

अस्या नगर्य्याः स्फुरणेन नित्यं
प्रकम्पते सर्व्वमलं समन्तात् ।
कालानलानुद्गिरतीह मेघो
वहन्ति दुर्गन्धमयाः समीराः ॥ ३५ ॥

श्मशानराशावमितान् शवांस्तान्
कृतान्तदण्डानलराशयोऽत्र ।
दहन्ति हुङ्कारनिनादभीमाः
किन्त्वत्र तेषां न धियं हरन्ति ॥ ३६ ॥

महाह्रदे भीषणभीषणेऽस्मिन्
तेजोमये वारिणि पातितानां ।
न्यायेतराचारपरायणाना-
मेषा दशा हा ! किमु वर्णनीया ? ॥ ३७ ॥

उत्तप्ततैलेषु कृतान्तदूताः
भृज्जन्ति नित्यं ननु पापिवृन्दं ।
तत्राद्भुतः पापिविलापसार्थः
एष प्रसारी श्रवणे रुणद्धि ॥ ३८ ॥

ततोऽब्रवीद् दुःखितमानसोऽयं
युधिष्ठिरो निर्जरदूतमत्र ।
दुर्गन्धमांसास्थिकचादियुक्तं
गच्छामि पन्थानमहो ! कियन्तं ? ॥३९॥

भल्लूकगृध्रक्रिमिकीटयुक्ते
छिन्नाङ्गसङ्कीर्णतयातिक्लिष्टे ।
परेतकायाधिकृतेऽत्र भीमे
तमोमये नो न गतिर्विधेया ॥ ४० ॥

उवाच दूतोऽथ—विभो ! महात्मन् !
अयं भवत्पाद‌निवेशसीमा ।
इन्द्रानुमत्या यदि ते क्रमोऽस्ति
तदा निवृत्तो भव नो विलम्बः ॥ ४१ ॥

दूतोपदेशेन नितान्तदुष्ट-
दुर्गन्धकष्टेन च पाण्डवाग्रजः ।
यदा निवृत्तौ हृदयं चकार
तदा समन्तादभवद् विलापः ॥ ४२ ॥

पुण्यामृतक्षालितमानस ! त्वं
मुहूर्त्तमात्रं कृपयात्र तिष्ठ ।
परोपकारिन् ! मधुरः समीर-
स्तवागमादत्र सुखेन वाति ॥ ४३ ॥

संसर्गतस्ते मधुरो नु ! गन्धो
घ्राणेन्द्रियं नः सबलं करोति ।
भयङ्कराणां नरकार्णवानां
क्षयोऽपि कश्चिद् भवतीह नूनं ॥ ४४ ॥

त्वद्दर्शनानां सुबहूनि नून-
महो ! व्यतीतानि नु ! वासराणि ।
विशेषतस्त्वत्क्षणदर्शनेन
पुनः सुखं नो जनयाशु पूर्णं ॥ ४५ ॥
दण्डायमाने त्वयि यातना नः
क्षतिं न कर्त्तुं क्षमतेऽपि तीव्रा ।
अतः क्षणायापि नितान्तमस्मि
स्थित्वा भव त्वं करुणानुरक्ता ! ॥ ४६ ॥
के यूयमित्युक्तवति प्रसन्ने
युधिष्ठिरे दीनरवस्ततोऽभूत् ।
अहं नु ! कर्णोऽनुगतो नु ! भीमः
धनञ्जयोऽहं नकुलोऽहमेव ॥ ४७ ॥
अहं महात्मन् ! सहदेव एव
हा ! द्रौपदी लक्षणवर्जिताहं ।
हा ! द्रौपदेया वयमत्र श्रान्त्या
क्षणं वसामः कृपया तवेति ॥ ४८ ॥
निशम्य भूपो वच एतदेत-
दुवाच हाहा ! निरये निपेतुः !
प्रियप्रियाः सुन्दरचित्रशीलाः
धर्मस्य सूक्ष्मैव गतिर्न बोध्या ॥ ४९ ॥

नितान्तकष्टेन नु ! वर्त्तमानान्
हित्वा प्रियांस्तांस्त्रिदिवं प्रयातुं ।
नेच्छामि तत्तेऽत्र कृतं चिरेण
देवेन्द्रपुर्य्यां प्रतिगच्छ दूत ! ॥ ५० ॥

दूतादुपश्रुत्य ततः शचीशो
वृत्तान्तजातं सहसादितेयैः ।
समं समागत्य युधिष्ठिरस्य
द्रुतं समास्रेषसुखं प्रलेभे ॥ ५१ ॥

अहो ! तदानीं नरकावभास-
स्थानं स्वरेवाभवदेव शीघ्रं ।
कृत्वा स्मितं विस्मितमात्मवृत्तौ
युधिष्ठिरं प्राह शनैः स्वरीशः ॥ ५२ ॥

एतत् स्थलं नो निरयाभिधानं
न वन्धुवर्गस्तव वर्त्ततेऽत्र ।
भवानपश्यद् गुरुनाशहेतु-
वाक्येन तान्तां नरकाभिनीतिं ॥ ५३ ॥

मन्दाकिनी पापहरी पुरस्ते
प्रवाहहस्तेन पवित्रवृत्तं ।
भवन्तमामन्त्रयितुं प्रवृत्ता
वन्दस्व तत् तां शिरसा नतेन ॥ ५४ ॥

पवित्रनीरे सुरलोकनद्याः
नितान्तभक्त्या सहसावगाह्य ।
विहाय तं मानुषभावमाशु
भवान् सुखेन स्वजनान्वितोऽस्तु ॥ ५५ ॥

अमरनिकरश्लाघ्यः साधुवेभ्यो वरेभ्यो
मधुरमधुरभक्त्या दिव्यया चानुरक्त्या ।
विमलविमलधारे देवनद्याः सुनीरे
समुचितमवगाह्य भ्राजते स्म प्रसह्य ॥ ५६ ॥

इति श्रीअन्नदाचरण तर्कचूडामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
नरकाभिनयदर्शनं नाम-
एकविंशः सर्गः ।



( सम्मेलनं । )

नारदः सविबुधो युधिष्ठिरं
वान्धवान् गमयितुं ततो द्रुतं ।
जाह्नवीतटपथेन संप्रया-
नुक्तवान् मधुरमाशु सादरं ॥ १ ॥

ज्ञानवन् ! सुरनदीपयोभरे
निर्म्मले सरसमक्षि पात्यतां ।
दिव्यमारुतविचुम्बनाहत-
पद्मकम्पनमलं निरीक्ष्यतां ॥ २ ॥

जाह्नवीकुसुमभारमोदित-
दिव्यधीरसुसमीरसेवनं ।
गृह्यतां विकजमोदिपङ्कज-
स्पन्दनेन मधुरेण तुष्यतां ॥ ३ ॥

मेदिनीष्वपि नदी समीरणः
पङ्कजं विहगराजिकूजनं ।
पादपोऽपि निवसन्ति वक्षरी
तत्र किं नु ! मधुरत्वमीदृशं ? ॥ ४ ।

यत्र यत्र नयनेऽत्र गच्छत-
स्तत्र तत्र समलौकिकी प्रभा ।
राजते मधुरताविनाकृतं
किञ्चनात्र न विलोक्यते क्वचित् ॥ ५ ॥

दृश्य ईदृश इहास्ति कश्चन
नैव यो न गमिकर्म्म मेऽभवत् ।
किन्तु नेदृशमशेषभासुरं
स्थानमेति ननु वीचिकर्म्मतां ॥ ६ ॥

ईदृशे महति भास्वरे स्थले
संस्थितेऽपि मतिमन् ! कदाचन ।
मेदिनी समभिगम्यते मया ।
त्वादृशां प्रणयदृष्टये सतां ॥ ७ ॥

वीरराजसमधिष्ठितस्थले
आगता वयमलच्यभावतः ।
स्फूर्त्तिजातमनिवेदितामपि
सूचयत्यनिशमस्य दिव्यतां । ८ ॥

यद्यदेव पततीह दृक्पथे
तत्तदेव रमणीयतामयं ।
वक्ति कोऽस्य समवायिकारण-
माद्भुतं ध्रुवमलौकिकं कुतः ॥ ९ ॥

भूपतीनिह नु ! पूर्ब्ववर्त्तिनो
द्रष्टुमाशु ननु शक्ष्यसि स्फुटं ।
किन्तु कश्चिदपि नैव दास्यति
स्पर्शमल्पमपि तुभ्यमुत्तृषे ॥ १० ॥

पश्य पश्य—तरुवाटिकामिमां
यादवैः सदयितैरलङ्कृतां ।
अत्र वन्धुचयवीचणैस्तव
प्रीतिजातमतुलं जनिष्यते ॥ ११ ॥

एष एव निषधाधिपः स्वयं
दिव्यशान्तिसुखभोगपण्डितः ।
सार्द्धमेव नृपभीमकन्यया
काञ्चनासनमिहाधितिष्ठति ॥ १२ ॥

दक्षिणे वटतले निराविले
पद्मरागमणिवेदिकोपरि ।
शास्त्रजातपरिशीलने रतं
पाण्डवाग्र्य ! भरतं विलोकय ॥ १३ ॥

दक्षिणेन तरुवाटिकां पुनः
दिव्यकान्तिसुविलिप्तविग्रहः ।
दृश्यतां नृपवरः*शकुन्तला-
तर्पितो मधुरताकुलाकरः ॥ १४ ॥

नीलकान्तमणिभूषिते तले
नागकेशरतरोः समीक्ष्यतां ।
मूर्त्तिमानिव नु ! पुण्यसञ्चयः
शोभते खलु ययातिभूपतिः ॥ १५ ॥

अत्र सुन्दरसुशोभिमण्डपे
नृत्यगीतसमलङ्कृते शुभे ।
राजते पुरुरयं धरेश्वरो-
ऽशोकपादपततिप्रवेष्टिते ॥ १६ ।

कानने प्रकृतिदिव्यमन्दिरे
वल्लरीकुसुमचर्च्चिते सकृत् ।
अत्र पातय दृशौ समन्ततः
मोदजातमनिशं लभस्व च ॥ १७ ॥

काननप्रियसखः पिता तव
मातरौ च बहुजन्मपुण्यतः ।
लोकमेतमभिलभ्य सन्तत-
मक्षयामितसुखार्णवे स्थिताः ॥ १८ ॥

वीक्ष्य तातमपि मातरौ नृपो
दूरतः प्रमदवारिसेचितः ।
भूतले खलु पपात दण्डवद्-
गद्गदेन वचसास्तवीदपि ॥ १९ ॥

प्रस्नु तस्तनपयःप्रसाधिते
ते च मोदसलिलाप्लुतः स च ;
अब्रुवन्—सदय वत्स ! सत्वर-
मुत्थितः सहजधैर्य्यवान् भव ॥ २० ॥

आजगाम सुखवासरं तव
दुःखकालरजनी व्यलीयत ।
अत्र नो किमपि खेदकारणं
गच्छ बन्धुजनभाक् सुखी भव ॥ २१ ॥

भ्रातृदर्शनसमुत्सुकस्तदा
भाग्यवत्तिवरस्तदाज्ञया ।
पाण्डवस्त्रिदिववासिभिः सम-
मग्रतः खलु जगाम पूर्ब्ववत् ॥ २२ ॥

उक्तवानथ मुनिः पुनर्नृपं
पश्य रत्नततिसज्जितं शुभं ।
अप्सरस्ततिनिषेवितं परं
साधु विस्तृतमिदं निकेतनं ॥ २३ ॥

अत्र राजमुकुटोपमो रघुः
स्वर्गमोदरससागरोदरे ।
नित्यमेव पतितः समं सुखं
दीव्यति त्रिदिववासिभिश्चिरं ॥ २४ ॥

सुन्दरे प्रकृतिचारुकानने
राजते किमिव चारुविग्रहः ।
अत्र वीरपतिरेष भूपतिः
धार्म्मिकस्तु सगरो महाशयः ॥ २५ ॥
रामदेवजनकोऽयमुत्सुको
यत्र तत्र विहरन् निजेच्छया ।
दिव्यकान्तवपुषा विभूषितः
शोभते भृशमहो ! निरीच्यतां ॥ २६ ॥
साधुकर्म्मकुशलः प्रतापवा-
नस्त्रशस्त्रनिपुणः स पण्डितः ।
दीप्यते नियतमुत्सुकः स्वतो
भूमिपालनिकरः पदे पदे ॥ २७ ॥
चिप्यतां नयनमत्र—धार्म्मिक-
आचरन् विविधमुत्कटं तपः ।
उद्धरन् निजनिदानभूपतीन्
नित्यशान्तिमधुना निषेवते ॥ २८ ॥
उज्ज्वलद्विविधवेशभूषितः
शान्तिवारिभरसिक्तविग्रहः ।
काश्यपीशनिकरः पदे पदे
तत्र चारु विहरन् सुशोभते ॥ २९ ॥

एष एव नृपतिः पुरञ्जयः
एष एव नृपतिः क्रिलांशुमान् ।
एष एव नृपतिर्दिलीपकः
एष एव नृपतिः ककुत्स्थितः ॥ ३० ॥

एतदुक्तवति नारदे मुनौ
तत्र तत्र ननु वस्तुसञ्चये ।
चित्तमर्पयति पाण्डवो नृपो
धार्म्मिकः सपदि विस्मितोऽभवत् ॥ ३१ ॥

तत्रहाथ सहसा सुविस्मितं
पाण्डवं मधुरमब्रवीन्मुदा ।
यत्कृते तव मनः सुचञ्चलं
निर्निमेषनयनेन पश्य तान् ॥ ३२ ॥

दृष्टपूर्व्वसदृशत्वसूचितो
ब्रह्मकायपरिभूषितः स्वयं ।
माधवोऽयमधुनात्र दीप्यते
शोभया निजशरीरजातया ॥ ३३ ॥

आयुधैः परमदीप्तिशोभिभिः
सेवितं परमचारुदर्शनं ।
दिव्यदीप्तिनिचितो धनञ्जयः
सेवते तमधुना—निरीक्ष्यतां ॥ ३४ ॥

शस्त्रशोभितकरः सुदर्शन-
उष्णरश्मिसदृशो धनुर्धरः ।
कर्ण एष रविमण्डले स्वतो
वीक्ष्य शान्तिरमला प्रगच्छतां ॥ ३५ ॥

दिव्यमूर्त्तिधर एष पाण्डवो
मूर्त्तिमत्पवनदक्षिणो स्वयं ।
प्रीतिमान् सहृदयो वृकोदरः
शोभते किमिव सुन्दरोदरः ॥ ३६ ॥

दिव्यसुन्दरपवित्रविग्रहौ
प्रीतिदौ ननु कनिष्ठपाण्डवौ ।
स्वर्गवैद्यसविधे निरन्तरं
राजतः सपदि पश्य तौ भृशं ॥ ३७ ॥

क्षिप्यतां मधुरमक्षि सादरं
वीक्ष्यतां—त्रिदिवसाधुशोभिनी ।
द्रौपदी कनकपद्ममालिनी
प्रेयसी मधुरहास्यशोभिनी ॥ ३८ ॥

क्वैव वा द्रुपदनन्दिनीतुला ?
विद्धि साधु कमलामिमां ध्रुवं ।
इच्छया ननु विभेर्भवत्कृते
जन्मवादमभजद्धरातले ॥ ३९ ॥

द्रौपदीरुचिरकुक्षिनिर्गताः
एतएव ननु पञ्च देवताः ।
वासराणि ननु कानिचिद्भु वि·
त्वमिजातमुदपादयन् भृशं ॥ ४० ॥

एष एव पितुरग्रजस्तव
शोभतेऽधिपतिरूपतः सदा ।
जेष्ठतातमिममाविलोकयन्
शोकजातमखिलं नु ! विस्मर ॥ ४१ ॥

यामिनीशसमवर्च्चसं प्रियं
स्नेहभाण्डमभिमन्युमुत्सुकं ।
वीक्ष्य नन्दनमलं धनुर्धरं
शोकमोहविनिराकृतो भव ॥ ४२ ॥

शान्तनुप्रियसुतं सुरेव तं
सत्यकार्य्यवचनं विलोकय ।
पश्य देवगुरुसन्निधौ चिरं
द्रोणमेतमनपायिवर्च्चसं ॥ ४३ ॥

सैन्यसंघमपरं भवन्मत-
माश्रयन्तमधुना मुहुर्मुहुः ।
वीक्ष्य तद्विरहभावनातति-
मोचितो भव चिराय साम्प्रतं ॥ ४४ ॥

आश्रमेऽत्र मधुरे निरीच्यतां
संयमी नु ! विदुरः चमापरः ।
व्यापयन् परमदिव्यवर्चसा
लोकमेतमखिलं चिरं भृशं ॥ ४५ ॥
भूपतिद्रुपद एष धार्म्मिकः
उग्रसेन-वसुदेवकाविमौ ।
धृष्टकेतु-निशठावमू पुरः
भान्ति नित्यमधुना पृथक्स्थले ॥ ४६ ॥
उक्त्वै तदेव विरते सुरपुर्य्यधीशे
धर्म्मात्मजः सपदि कौतुकिमानसोऽयं ।
गत्वा स्वयं प्रणयतो विनयेन भूयः
एकैकशः स्वजनमालपति स्म धन्यः ॥ ४७ ॥
सार्द्धं मुहुर्मुहुरलं ननु तेन तेन
विस्रब्धभूतघटनावलिमात्मनीनां ।
उक्त्वा निशम्य च जगत्प्रथितस्वभावः
पाण्डोः सुतः स न ययौ परितृप्तिपारं ॥ ४८ ॥
तं तं ततः स्वजनमाशु सुखं गृहीत्वा
दिव्यप्रभैस्त्रिदिववासिभिरप्यनन्तैः ।
साकं धरेश्वरवरः पुरतो विधाय
देवर्षिमिन्द्रमपि माधवगेहमाप ॥ ४९ ॥

भीमादिभिर्दुपदभूपतिकन्ययापि
संसेवितं रुचिरदिव्यनिकेतनस्थं ।
गोविन्दमाशु परिवीक्ष्य सुनिर्निमेष-
नेत्रेण मोदनयनाम्बुसुषिक्त आसीत् ॥ ५० ॥

दृष्ट्वा परस्परमलं भृशनिर्निमेष-
मुत्थाय तत्क्षणमहो ! हरि-भूमिपालौ ।
आश्लेषणं समधिकं चिरमाविधाय
हर्षाश्रुभारनिवहैः परिषिञ्चतः स्म ॥ ५१ ॥

अव्यक्तकर्म्मनिवहैरिव मूर्त्तिमद्भिः
व्यक्तान्यया मधुरया ननु भाषयैव ।
अव्यक्तभावनिचयं मधुरं वदन्तौ
स्वं स्वं मनोगतमहो ! परिह्लृष्यतः स्म ॥ ५२ ॥

पुत्रैः पितुर्दयितया दयितस्य साध्वोः
भ्रातुः सहोदरचयैः प्रियबन्धुभिस्तैः ।
बन्धोः प्रभोः सबलसेवकराजिभिश्च
भाषात्यतीतमजनीह सुमेलनं तत् ॥ ५३ ॥

विद्याधरीकरतलच्युतपुष्पवृष्टि-
स्तस्मिन् क्षणे निपतिताप्सरसां प्रनृत्यं ।
जातं ववौ मधुरधीरसुगन्धिवातो
नेदुः स्वयं मधुरदुन्दुभयश्चिराय ॥ ५४ ॥

भावेन्द्रियात्यविषयं सुखशान्तिवीजं
भ्रात्रा प्रियेण सुहृदा तनयेन पत्न्या ।
सम्मीलनं सुमधुरं सह पाण्डवानां
विद्योततां चिरमलं ननु वाञ्छनीयं ॥ ५५ ॥

हे नारायण ! सर्गपालनलय-
व्यापारमुख्याश्रय !
हे भक्तातिपवित्रसाधुहृदया-
धिष्ठातृदेव ! प्रभो !
हे त्रैलोक्यशरण्य ! योगिपरम-
ध्यानैकगम्यप्रभ !
हे विश्वेश्वर ! ते पवित्रकृपया
विश्वस्य भद्रं भवेत् ॥ ५६ ॥

निर्ब्बाधं चरतां दिनेशशशिना-
वानन्ददात्री परा
मूलेव प्रकृतिर्भवत्वविरतं
मालिन्यशून्या दिशः ।
राजन्तां मनुजा निरन्तरमिमे
सुस्थाः प्रफुल्लाननाः
वाक् पूतास्तु सदा कुलं सुलभता-
मस्य प्रणेतुः शिवं ॥ ५७ ॥

इति श्रीअन्नदाचरण तर्कचूड़ामणि-प्रणीते
महाप्रस्थाने महाकाव्ये
सम्मेलनं नाम द्वाविंशः सर्गः ।

---

( ग्रन्थकर्त्तुः परिचयः )

नाम्नाद्यापि प्रसिद्धो निवसति नियतं
वङ्गदेशाधिवासि-
मर्त्त्यानां चित्तसौधे त्रिभुवनजननी-
प्रापये सप्तकृत्वः ।
प्राणांस्तत्याज देवीं सकलगुणमयीं
पश्यति स्मापि योऽसौ
सर्व्वानन्दो महात्मा विहरति मधुरं
ज्ञानवान् नित्यमुक्तः ॥ १ ॥

अस्यैव निर्मले वंशे
भूदेवोऽजनि तात्त्विकः ।
हरिनाथो गुणोपेतो
हरिनाथो हि वस्तुतः ॥ २ ॥

योऽसौ महात्मा तनुपातकाले
ज्योतिः परं वीक्ष्य मनः समाधौ ।
निवेश्य वन्धूनतिसन्निधिस्था-
नपातयद् विस्मयसागरान्तः ॥ ३ ॥

तस्मात् समभवद्विप्रः
कालीकिङ्करसंज्ञकः ।
अशेषगुणसम्भारा-
लङ्कृतो यश्चिरं वभौ ॥ ४ ॥

ऐकान्तिकी भक्तिरनल्पभक्त्या
गुणैकसिन्धुं तमनल्पवन्द्यं ।
असेवतासादितसाधुभावा
पत्नीव नित्यं पतिमात्तवोधं ॥ ५ ॥

नारायणस्मरणपूजननित्यलुब्ध-
चित्तस्य सत्यकरुणानिलयस्य यस्य ।
नेत्रान्ततो भुवननाथगुणालिगीति-
र्वारीण्यपातयदलं सततं सुखानि ॥ ६ ॥

महाप्रभावसम्पन्नो
म[illegible]ायं तनुच्चये ।
"[illegible] पितृगुणं धत्ते"
दृ[illegible]त्यमदर्शयत् ॥ ७ ॥
रत[illegible]ाच्छम्बुकवत्
त[illegible]ातोऽहमप्रभः ।
अनी[illegible]तो गुणैः सद्भिः
अन्त[illegible]वरणाभिधः ॥ ८ ॥
तर्कचूडामणिरहं
तर्कज्ञानविवर्ज्जितः ।
कवित्वशक्तिहीनोऽपि
काव्यं कर्त्तुं समुत्सुकः ॥ ९ ॥
"नोयाखालि" जिलायत्ता
"सोमपाड़ा" स्थली शुभा ।
अस्ति वासस्थली काव्य-
मेतद्रचयतो मम ॥ १० ॥
त्रिपुरान्तर्गोविन्दीया-
वास्तव्यौ सहजावुभौ ।
श्रीमान् माधवचन्द्रश्च
गुह-राजान्वयोद्भवौ ॥